ISSN :- ०९७४-८९४६

अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**३४ वर्षे प्रथमोऽङ्कः ( जनवरीमासाङ्कः ) २००९ ई०**

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट, पोस्टल आर्डर अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतभाषा या माधुर्यप्रागल्भ्यनैसर्गिकात्वसौकर्यभावगाम्भीर्यादिगुणगरिम्णा अखिलेतरभाषाणां मूर्धाभिषिक्तत्वेन विराजते, तदस्या भाषायाः परिशीलनं मानवमात्रस्य परमो धर्मः। प्रकृत्यैवेयं भाषा यत्तदुपज्ञत्वेन स्वत्वेन वा यं कमपि देशविशेषं नानुबध्नाति, सम्बध्नाति चात्मीयत्वेनाखिलानेव देशान्। अत एवेयं देवभाषेति पदवीमारोपिता विद्वद्भिः, अत एव सर्व एव स्त्रियः पुरुषा वा साधिकारा अध्येतुमिमामिति। अद्यापि परः सहस्राः संस्कृतविद्वांसः रूसजर्मनफ्रांस–इङ्गलैण्ड–अमेरिका–पोलैण्डादिदेशेषु योरोपखण्डे विराजन्ते।

सर्वास्वपि तत्तेद्देशीयासु भाषासु च अद्यापि असङ्ख्याताः शब्दः विशुद्धसंस्कृता संस्कृतशब्दैः सह सादृश्यं जुषमाणस्तद्विकृतरूपा वा समुपलभ्यन्ते, इतस्ततः प्रसृताः संस्कृतभाषायां विश्वभाषाजननीत्वं साध्यन्तीति कस्याविदितम् अस्यां भाषायां ये ये धार्मिका राजनीतिकाः सामाजिका अर्थानुबधिनो वैज्ञानिकाश्च विषयाः, प्रणिबद्धाः सत्याहिंसापरस्वागृहनुतादयो मानवमात्रहितावहा वर्तन्ते, मन्यामहे, तेषां तलावगाहितया सम्यक् परिशीलनेन महानुपकारो जगतो भविष्यतीत्यस्माकं सुदृढो विवासः। अतः शान्तिसुधानिष्यन्दकरी अमन्दानन्दनिर्झरी संस्कृतभाषामाधुरीयं सर्वैः शान्ति–साम्राज्यस्थापनाकामैः विश्वैकात्म्यविधित्सुभिः सुधीभिः सर्वात्मना निषेव्या परिशीलनया च। यदबलम्क मानवजीवनस्य सौख्यं शान्तिः समृद्धिविश्वबधुत्वं वा पल्लवितं भवति तदखिलं ज्ञानविज्ञानं संस्कृतवाङ्मयमिदं सर्वोत्कर्षेण परिपूर्णतया च परामृशति। तदेतादृशस्य प्रेमः श्रेयः साधकस्य सर्वतोमुखप्रमुखज्ञेय–साधननिधानभूतस्यास्य साहित्यस्यापरिशीलनं नाम नूनं दैवदुर्विलसितमेव केवलमित्याकलयामो वयम्। अतो जगदिदं परितो सानन्दं शान्तिरसमारसयद् भूयोऽपि चतुरस्रतया समुल्लसत् भूयात्सर्ग–सादृश्यमादधानमिति।

परेशानुकम्पया तथाविद्यायास्तस्याः सुरभारत्या भव्यभावं ज्ञानसौरभं च क्रोडीकृत्य विलसन्तीयं शोधप्रभा विद्वज्जनानां शोधगर्भनिबन्धनिर्भरां करकमलमुपेतुमातुरेति प्रणिहितसामग्रीसौष्ठव–मासाद्य तदुद्भावकयत्नं सफलयन्तु सुधीजना इत्यावेदयते।

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

अद्यापि भारतीयपराम्परायां लिपेराविष्कार: कदा जात: इतिविषये विवदन्ते समीक्षका:। ब्रह्मणा कृता लिपि: ब्राह्मी अपि भारतीया लिपिर्नास्तीति पाश्चात्या: वदन्ति किन्तु भारतीया परम्परा इमामेव सर्वप्राचीनां लिपिं मत्वा भारतदेशे प्रचलितानां लिपीनां मूलं स्रोत: स्वीकरोति। वस्तुत: 'लिपि' शब्दोऽयं 'लिप् उपदेहे' धातो: 'इक् कृष्यादिभ्य:' इति सूत्राद् इक्प्रत्यययोगान्निष्पद्यते। फलत: लिप्यते इति लिपिरित्यर्थमेवाङ्गीकृत्य व्यवहारो दृश्यते। पूर्वस्मिन् काले काष्ठफलकादिकं सुधा-मसीप्रभृतिद्रव्यैरुपलिप्य अङ्गुलिभिर्नखैर्नडैर्वा वर्णानामाकृतिर्विधीयते स्म। 'लिपि' शब्दस्य प्रयोग: लेखनेऽप्यास्तीति मेदनीकोशस्य 'लेखा लिपि:' इतिवचनादवसीयते। 'लेखा' शब्द: लिख् विलखने धातो: निष्पद्यते। प्राचीनकाले काष्ठफलके, प्रस्तरे कार्पासे च लेखा: लिखिता: भवन्ति स्म। देवानां कृतेऽपि 'लेख' शब्दस्य प्रयोगो दृश्यते यतो हि प्राचीनकाले स्वीकृतानां देवानां विग्रहात्मिका रचना भित्तिषु लिखित्वैव क्रियते स्म। अद्यापि ग्रामाञ्चले विवाहादिकौतुकावसरे द्वारभित्तिषु गणेशगौरीविष्णुगजा-श्वस्वस्तिकशंखचक्रपद्ममत्स्यादीनां गैरिकादिभिर्लेखनं दृश्यते।

लिखिताक्षरविन्यास: लिपिरिति 'लिखिताक्षरविन्यासे लिपिर्लिबिरुभे स्त्रियौ' इत्यमरसिंहवचनात् सिद्ध्यते। लिखित: अक्षरविन्यासश्च लिपिशब्देन बोधित:। लिखित: अर्थात् उत्कीर्णित:। शिलालेखा: उत्कीर्णिता एव भवन्ति। किन्तु प्राचीनकाले ग्रन्थेषु अक्षरविन्यासात् पूर्वं पत्राणामुपरि लेपनमावश्यकमासीत्। भूर्जपत्राणामुपरि लेपविशेषं प्रथमम् उपलिप्य अक्षरविन्यासो विधीयते स्म। ताडपत्राणां लेखनात्पूर्वं शंखादिभि: घर्षयित्वा अक्षरविन्यासयोग्यता विधीयते स्म। एवमेव कार्पासकेष्वपि लेपनं कर्तव्यं भवति स्म। अनेन विवेचनेन स्पष्टं भवति यत् लेपनं लेखनम् उभयमपि परमावश्वयकमासीत् ग्रन्थनिर्माणे। फलत: कालान्तरे लिपि: लेखश्च शब्दौ समानार्थकौ सञ्जातौ। पाणिनिना कौटिल्येन च लिपिशब्द: प्रयुक्त: येन तस्मिन् काले लेखनप्रथाया: परिचयो जायते।

३४ वर्षे अङ्केस्मिन् विविधविषयविश्लेषपरा: द्वादशलेखा: प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्-भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रिय: संवर्धनार्थमभ्यर्थते सुमनस: विदुष:।

**प्रो० रमेशकुमारपाण्डेय:**

सम्पादक:

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग

# भारतीयसंस्कृतौ कर्मकाण्डस्य महत्त्वम्

**डॉ॰ रामराज उपाध्यायः**

विश्वप्रसिद्धातीवप्राचीनास्ति भारतीया संस्कृतिः। भारते भवम् इत्थं भारतशब्देन निष्पन्नोऽयं भारतीयः शब्दः। जन्महरौ भवौ[1] इत्यनुसारेण भवः क्षेमेशसंसारे सत्तायां प्राप्ति जन्मनोः इति मेदिनीकोशानुसारेण अर्थवतो भवशब्दस्यार्थे वर्तमानः भारतीय शब्दोऽत्र भारते जन्मवतः, भारते सत्तावतः, भारते प्राप्तस्य पदार्थस्य वाचकोऽस्ति। जम्बूद्वीपस्य नववर्षान्तर्गतनवमवर्षः भारतवर्षः। यथा-उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तखारतं नाम भारती यत्र सन्ततिः। प्रकारेणानेन भारतस्य या संस्कृतिः विद्यते सा भारतीया संस्कृतिः।

कर्मकाण्डः भारतीयसंस्कृतौ मूलाधाररूपेण दृश्यते। कर्मकाण्डे पदद्वयं प्राप्यते। तत्र क्रियत इति विग्रहे भावे कर्मणि चार्थे सार्वधातुभ्यो मनिन् इत्युणादि ४-१४५ सूत्रेण मनिन् प्रत्यये कृते कर्म शब्दो निष्पद्यते। कर्म शब्दोऽयं विभिन्नदृष्ट्या नानाविधार्थकोऽस्ति। कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः[2] इत्यनुसारेण कर्म शब्दः क्रिया शब्दश्च अनर्थान्तरवचनः।

वैयाकरणदृष्ट्या कर्मत्वं परसमवेतधात्वर्थजन्यफलशालित्वं नाम। यत् क्रियते तत् कर्म इति प्रसिद्धेः। करौतेनिखिलक्रियावाचकत्वात् कर्तृव्यापारैर्यत् साध्यते तत् कर्म नाम। एतदर्थं क्रिया व्याप्यं कर्म उच्यते, तत् कर्म चतुर्विधम्-

१-निर्वत्यम्-यथा घटं करोति, पुत्रं प्रसूते।

२-विकार्यम्-तदपि द्विविधम्-

क-प्रकृतेरूच्छेदकं-यथा काष्ठं भस्म करोति।

ख-गुणान्तराधायकम्-यथा सुवर्णं कुण्डलं करोति।

३-प्राप्यम्-यथा ग्रामं गच्छति, चन्द्रं पश्यति।

४-अनीप्सितम्-यथा पापं त्यजति।

---

१. अमरकोष : ३-३-२०६

२. अमरकोष : ३-२-१५

न्यायवैशेषिकदृष्ट्या द्रव्यगुणकर्मसामान्यविशेषसमवायाभावेति सप्तषु पदार्थेषु तृतीयः पदार्थः कर्म। तच्च तत्र उत्क्षेपणापक्षेपणाकुंचनप्रसारणगमनेति भेदैः पंचविधम्।

अन्यत्र सात्विकराजसतामसभेदेन त्रिविधम्, यागहिंसादि च कर्म उच्यते। ज्योतिर्विद् दृष्ट्या लग्नाद् दशमं स्थानं कर्म उच्यते। तैर्लग्नांबद्यूनकर्माणि केन्द्रमुक्तं च कण्टकम् इति कर्मणः केन्द्रकण्टकसंज्ञापि क्रियते।

वेदे, वेदस्य प्रायोगिके रूपे कर्मकाण्डेऽत्र प्रसंगे नित्यनैमित्तिककाम्यप्रायश्चित्तनिषिद्धभेदात् पंचविधम्। प्रायश्चित्तस्य च नैमित्तिकेऽन्तर्भावात् चतुर्विधमेव प्रायः कर्म। कुर्वन्नेवेह कर्माणि जिजिविषेच्छतं समाः[1] इत्यस्य भाष्ये अग्निहोत्रादीनि कर्माणीति प्रतिपादितत्वात्। अथ च कर्मपदेन ऋग्वेद प्रभृतिषु बहूनां मन्त्राणां भाष्यकारैर्यज्ञादीनां लोकपरलोकाभ्युदयकारकालौकिककार्याणां मन्त्रब्राह्मणात्मवेद-तन्मूलकशास्त्रेषु प्रतिपादितानां विभिन्नधार्मिकव्यापाराणाम् अदृष्टसाधकानां निर्देशात् तान्येव तत्वानि कर्म पदवाच्यानि कर्मपदेनात्र गृहीतानि सन्ति।

**कर्म शब्दस्य व्याख्यानन्तरं काण्डशब्दः व्याख्यायते–**

काण्डम्–कनतीति विग्रहे कनी दिप्तौ। कनी[2] दिप्तिकान्तिगतिषु कन् धातोः **अमन्ताड्**
**इडः**[3] सूत्रेण प्रत्ययेऽनुबन्धलोपे क्वादिभ्यः कित्[4] सूत्रेण कित् संज्ञायाम् **आनुनासिकस्य क्विज्झलोः क्ङिति** इति **अनुनासिकस्याघ्गस्य** कन् इत्यस्य उपधायाः दीर्घे, अनुस्वारपररूपादिकार्ये काण्डमिति शब्दो निष्पद्यते।

काण्डो स्त्री दण्डबाणार्णव-वर्गावसरवरिषु इति[5] तथा शरवृक्षः, अर्वा, कुत्सितः, वर्गः (वर्गश्च एकजातीयः समवायः) यथाह भगवते-क्रिया काण्डेषुनिष्णातो योगेषु च कुरुद्वहः। काण्डर्षिः, काण्डस्य ऋषिः। यद्वा काण्डेषु, एकजातीयक्रियादिसमवायेषु ऋषिर्विचारकः, इति शब्दकल्पद्रुमोक्त्यनुसारेण-

**काण्डं चावसरे चाणो नाले स्कन्धे च शाखिनाम्।**

इति धरणिकोशानुसारेण च काण्ड शब्दो हि अनेकार्थाः। तेषु अनेकार्थेष्वत्रैकजातीया क्रिया समवायः वर्गः अर्थो गृहीतोऽस्ति। कुत्रापि काण्ड शब्दस्यार्थः क्रमो भवति। तत्र कर्मणः क्रमं यत्रास्ति तत्र कर्मकाण्डमित्यवधेयम्।

भारतीयसंस्कृतौ अत्युत्तमा जीवनशैली विद्यते। यद्येवं कथ्यते तत् सर्वासु संस्कृतीषु भारतीया

---

१. यजुः ४०-०२
२. सि०कौ०पृ० ४३४
३. उ०१-११४
४. उ०१-११५
५. अमरकोषः ३-३-४३

संस्कृति अत्युत्तमा संस्कृतिरस्ति। कारणमस्य भारतीयसंस्कृतौ विचार्यते कथं सर्वेषां जनानां उत्तमा जीवनशैली भवेत्। **उत्तमा मानमिच्छन्ति धनं मानं च मध्यमा, अधमा धनमिच्छन्तीति** रीत्या अस्यां संस्कृतौ उत्तमा जीवनचर्या एव गृहीता। अन्य संस्कृतौ जनाः धनस्य सर्वोपरि स्थानं स्वीकुर्वन्ति। अत्र पुरुषार्थचतुष्टयरूपेण धर्मार्थकाममोक्षादिविषयाः गृहीताः। सर्वत्र केवलमिह लोकस्यैव चर्चा जाता परंचाऽत्र लोकद्वयस्य चर्चा क्रियते-इहलोकः परलोकश्च। येषां कृतिः अस्मिन् लोके उत्तमाऽस्ति तेषां परलोके मोक्षादि प्राप्तिर्भविष्यति। सूत्रात्मकरुपेणेत्थं वक्तुं शक्यते-धर्मः (अर्थः+कामः)=मोक्षः। अर्थात् सधर्मार्थकामाभ्यां मोक्षाप्तिः। अस्मिन् लोके जनानां जीवनं कथं भवेत्। इत्यस्मिन् प्रकरणे भारतीया संस्कृतिः कर्मकाण्डेन सह संबद्धाऽस्ति। विवृतिमस्येत्थमस्ति।

भारतीयसंस्कृतौ निद्रोद्घाटनतः रात्रौ निद्राकालपर्यन्तं किं करणीयमकरणीयं वा इत्यस्मिन् विषये स्पष्टं लिखितमस्ति कर्मकाण्डे। मानवस्याचारपद्धत्यां प्रथमो धर्मः विद्यते। आचारभ्रष्टा जनाः कथमपि सुखिनो न भवन्ति।[१]

**आचारः प्रथमो धर्मः सर्वेषामिति निश्चयः।**
**हीनाचारी परीतात्मा प्रेत्य चेह विनश्यति॥**
**नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणा।**
**हीनाचाराश्रितं भ्रष्टं तारयन्ति कथंचन॥**
**चतुर्णामपि वर्णानामाचारो धर्मपालनम्।**
**आचारभ्रष्टदेहानां भवेद् धर्मपराङ्मुखः॥**

सर्वेषां जनानां कर्माणि निद्रोद्घाटनकालतः प्रारभ्यते। कालोऽयं कर्मकाण्डानुसारेण ब्रह्ममुहूर्त्तोऽस्ति।[२]

**रात्रेः पश्चिमयामस्य मुहूर्त्तो यस्तृतीयकः।**
**स ब्राह्म इति विज्ञेयो विहितः स प्रबोधने॥**
**रात्रेः पश्चिमे यामे तु घटिका षट्कमेवहि।**
**वेदाभ्यासं द्विजः कुर्यात् सा वेला पाठदायिनी॥**
**ब्राह्मे मुहूर्त्ते या निद्रा सा पुण्यक्षयकारिणी।**
**तां करोति द्विजो मोहात् पादकृच्छ्रेण शुद्ध्यति॥**
**ब्राह्मे मुहूर्त्ते बुद्ध्येत् धर्मार्थौ चानुचिन्तयेत्॥**[३]

इदानीं स्वास्थ्यसुरक्षणाय ब्राह्ममुहूर्त्तस्यावदानं नास्ति प्रच्छन्नम्। सर्वे चिकित्सकाः वदन्ति प्रातः काले निद्रां विहाय परिभ्रमणं ईश्वरानुचिन्तनं योगादि वा कुर्वन्त्विति। प्रातः संध्यायां प्राप्यते सनक्षत्रां प्रातः सन्ध्यां कुर्वीत्। अस्मिन् कर्मणि रात्रौ यत् कृत्यं कृतं तत्सर्व विचिन्त्य कर्मकाण्डं क्रियते। तस्योपरि चिन्तनेन तस्य पुनरावृत्ति र्न भविष्यति तथा दोषाद् विमुक्तिरपि भवति। तथैव

१. कर्मठगुरुः-पृ०१.

२. कर्मठगुरुः।

३. मनु०।

सायंकालेऽपि। अनेन कर्मकाण्डे सन्ध्यादिविधीभ्यः कृताकृतं विचार्यते किं करणीयमित्यनुचिन्त्यते च। प्रातरुत्थापनं कथं कर्त्तव्यं इत्यनुचिन्तनीयं यतो हि इतः कार्यारम्भः क्रियते। ब्राह्मे मुहूर्त्ते उत्थाय स्वमनोरथं विचिन्त्य स्वनासिकारन्ध्र्या प्रवाहानुगामी वायुदिग्तः हस्ततः मस्तकं मुखञ्च संघर्षणं कृत्वा करदर्शनं कुर्यात्। प्रक्रियेयं मन्त्रोच्चारणपूर्वकं भवति।

**कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती।**
**करमूले स्थितौ ब्रह्मा प्रभाते करदर्शनम्॥**[1]

ततो दन्तोर्ध्वपंक्तीभि अधोदन्तान् प्रेषयेत्।[2] दन्तपतनादिरोगान्नाशयति दन्तमूलानि पुष्णाति चेत्येष सिद्ध संकेतः। ततो गण्डूषत्रयं कृत्वा नेत्राभ्यां प्रक्षालनं कृत्वा च ताम्रपात्रस्थं जलं विशुद्ध्य पिबेत्। ततो इष्टदेवं संस्मरेत्।

**ब्राह्मे काले समुत्थाय गणेशादीन् स्मरेत्ततः।**
**प्रातः स्तोत्रं मंगलानि पठित्वा शौचमाचरेत्॥**

हस्ताभ्यां मस्तिष्कं मुखं च स्पर्शनं संघर्षणं च सक्रिय करणस्यैका प्रक्रिया वर्तते। करतलदर्शनस्योद्दश्यमस्ति स्वकर्मबलस्याधारीकृत्य कर्माणि कुर्वन्तु। कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। गीतादर्शनस्याप्युक्तिरियं विद्यते। स्पष्टमस्ति कर्मकाण्डस्य निर्देशः-

**उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम्।**
**मुखशुद्ध्यर्थमादौ तु गण्डूषत्रितयं चरेत्॥**
**आपूर्यशीतलजलेन मुखं प्रसिंचेत् पानीयबिन्दु विसरैर्नयने सदैव।**
**त्रिसप्तधारमखिलाक्षिरुजापहारी कर्मैर्तदुक्तमधियोगि गुरुप्रसिद्धम्॥**

अनन्तरं शौचादि विधानं प्रतिपाद्यते कर्मकाण्डे। यथा-

**शौचे यत्नः सदा कार्यः शौचमूलो द्विजः स्मृतः।**[3]
**शौचाचारविहीनस्य समस्ताः निष्फलाः क्रियाः॥**

यावत् शौचादि क्रियाः सम्यक्तया न क्रियते तावदन्याः क्रियाः यथोचितरीत्या न संपत्स्यते। इदानीं डेंगू, चिकनगुनियादिसहितामनेकेषां रोगाणामुत्पत्ति अशौचेन भवति। अपवित्रता यत्र भवति तत्र एतादृशाणां रोगाणामुत्पत्तिर्भवति। एतावता भारतीयसंस्कृतौ कर्मकाण्डे यथैवोल्लिखिता तथैव पालनीया। विलिख्यते-

**नैऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः॥**[4]

---

१. आचारप्रदीपः।

२. कर्मठगुरुः

३. दक्षस्मृतिः५-२,बाधूलस्मृतिः-२०।

४. याज्ञवल्क्यस्मृतिः१-१६,बाधूलस्मृतिः-८।

**दिवासन्ध्यासु कर्णस्थब्रह्मसूत्रोदङ्मुखः।**
**कुर्यान्मुत्रपुरीषे तु रात्रौ च दक्षिणामुखः॥**
**अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा।**
**वाचं नियम्य यत्नेन ष्ठीवनोछ्वासवर्जितः॥[१]**
**लिंगशौचं पुरा कृत्वा गुदशौचं ततः परम्।**
**एका लिंगे गुदे तिस्रस्तथा वामकरे दश।[२]**
**उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सिता॥[३]**
**धर्मविद् दक्षिणं हस्तमधः शौचे न योजयेत्।**
**तथा च वामहस्तेन नाभेरुर्ध्वं न शोधयेत्॥[४]**
**तिसृभिश्चातलात् पादौ शोध्यो गुल्फात् तथैव च।**
**हस्तौ त्वामणिबन्धाच्च लेपगन्धापकर्षणे॥[५]**
**पुरतः सर्वदेवाश्च दक्षिणे पितरस्था।**
**ऋषयः पृष्ठतः सर्वे वामे गण्डूषमाचरेत्॥[६]**
**कुर्याद् द्वादशगण्डूषान् पुरीषोत्सर्जने द्विजः।**
**मूत्रे चत्वार एव स्युर्भोजनान्ते तु षोडश॥[७]**
**दक्षिणं बाहुमुत्सृज्य वामस्कन्धे निवेशितम्।**
**यज्ञोपवीतमित्युक्तं देवकार्येषु शस्यते॥[८]**
**मुत्रोत्सर्गं द्विजः कृत्वा न कुर्याच्छौचमात्मनः।**
**मोहाद् भुंक्ते त्रिरात्रेण जलं पीत्वा विशुद्ध्यति॥**
**एका लिंगे तु सव्ये त्रिरुभयोर्मृदद्वयं स्मृतम्।[९]**
**मूत्रशौचं समाख्यातं मैथुने द्विगुणं स्मृतम्॥[१०]**
**स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः।**
**दिवा शौचस्य निश्यर्धं पथि पादो विधीयते।**
**आर्तः कुर्याद् यथाशक्तिः शक्तः कुर्याद् यथोदितम्॥**

---

१. देवीभागवत्-११-२-२।
२. आश्वलायनस्मृतिः, आचारेन्दुः।
३. मनुस्मृतिः-५-१३६।
४. आचारभूषणम्-पृ. १८।
५. मरीचिः।
६. पारिजात, आचाररत्नम् पृ. १४।
७. आश्वलायनस्मृतिः, आचारेन्दुः पृ. २४।
८. अंगिरा.।
९. दक्षस्मृतिः ५-५।
१०. दक्षस्मृतिः ५-११-१३।

तदनन्तरं स्नानादानव्रतादिकाः क्रियाः संकल्पपूर्वकं कुर्यात्।

**संकल्प्य च तथा कुर्यात् स्नानादानव्रतादिकम्।**
**अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति हि।।**[१]

संकल्पपूर्वकं या क्रिया सम्पाद्यते सा सम्यक् प्रकारेण सम्पूर्णा भवति। यतोहि ताः क्रियाः पूर्व कल्पिताः भवन्ति। कर्मकाण्डस्य प्रयोजनोऽयं विद्यते यत् सर्वेषां क्रियाणां सम्पादनात् पूर्व तस्योपरि चिन्तनं भवेत्। चिन्तनपूर्वकं योजनापूर्वकञ्च या क्रिया प्रारभ्यते सा क्रिया सफलीभूता भविष्यतीति। चिन्तने तासु क्रियासु दोषानामपमार्जनमपि भवति। अतः कर्मकाण्डविषये स्पष्टनिर्देशोऽस्ति यत् असंकल्पिता या क्रिया विद्यते सा निष्फलीभूता भवितुं शक्यते। कर्मकाण्डानुसारेण क्रियाणां सम्पादनं भवेत् चेत् न केवलं सफलतापूर्वकं ताषां फलं प्राप्नुते, अपितु अत्याधिक्यानि फलान्यप्याप्यते। यथा दन्तधावन प्रकरणे तस्य फलं दन्तानां स्वच्छताऽस्ति परञ्च-

**आयुर्बलं यशो वर्च प्रजाः पशवसूनि च।**
**ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते।।**[२]

इत्यनुसारेणैकया कार्यया बहूनि फलानि भवन्ति। यत्र वनस्पत्याऽनया रीत्या प्रार्थना क्रियते तत्र वनस्पति-विनाशकारिकाप्रवृत्तयः न विकसिता भविष्यन्तीति तात्पर्यम्। तेन शुद्ध पर्यावरणीयस्य स्थलस्य विकासो भविष्यति। षोडशशताब्द्यां पं. कमलाकरभट्टमहोदयेन विरचितः पूर्त्तकमलाकरः नाम्नः ग्रन्थैको विद्यते। तस्मिन् ग्रन्थे एका तरुपुत्रक विधिरस्ति। अस्यानुसारेण प्रतिमानवैः दश-दश तरवः पुत्रवत् पालनीयेति लिखितमस्ति। अश्वत्थोपनयनसंस्कारोऽपि वर्णितमस्ति तत्र। इदानीं वृक्षाणां महत्त्वं कीदृशमस्ति सर्वे जानन्ति, परञ्च विचारोऽयं तस्मात् कालात् विचार्यते चेत् पर्यावरणीयदोषाणां विषये का कथा? वटसावित्री, तुलसीविवाहामलकादिपूजने भारतीयसंस्कृतौ कर्मकाण्डस्य सुस्पष्टं दर्शनं भवति।

कर्मकाण्डे वाह्याभ्यन्तरौ शौचस्य विधानमस्ति। शुद्ध्यानन्तरं हि देवपूजनस्याधिकारी भवति जनः। आभ्यन्तरस्य शुद्धि यद्यस्ति तर्हि हृदयेन भ्रष्टाचारादिनिवारणं भवति। निःशंकमना यत् किमपि क्रियते तस्य सम्यक् फलं प्राप्यते। सर्वाणि कार्याणि शरीरमाध्यमेन क्रियते एतदर्थं दोषरहितं शरीरं भवेत् इति कर्त्तव्यम्। **शरीरमाद्यं खलु धर्मसाधनम्** इत्यनुसारेण काया रोगरहितं भवेदिति सर्वेषां जनानां कर्त्तव्यमस्ति।

भारतीयसंस्कृतौ कर्मकाण्डानुसारेण संस्काराणां प्रतिपादनं क्रियते। संस्क्रियतेऽनेन अथवा संस्करणं संस्कारः इति धिया मानवानां मलापनयनार्थम्, अतिशयाधानार्थं हीनांगपूर्त्यर्थञ्च संस्काराः सम्पाद्यन्ते। गर्भाधानादिसंस्कारैः मलापनयनं क्रियते। उपनयनादि संस्कारैः अतिशयाधानं क्रियते। येभ्यो

१. आचारेन्दुः, मार्कण्डेयपुराणस्योक्तिः।।
२. कात्यायनस्मृतिः १०/४, गर्गसंहिता अध्याय ७

संस्कारेभ्य: साधिकारं वेदाध्ययनेन सद्गुणानां विकासो भवति। विवाहसंस्कारेण हीनांगपूर्त्तिर्भवति। वंशपरम्परा अग्रेसरा: भवन्ति। संस्काराणां महत्त्वप्रतिपादनं कुर्वन् कथ्यते–

**स्वाध्यायेन व्रतैर्होमैस्त्रैविध्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।**[१]

संस्काराणां संख्याविषये विविधता दृश्यते। महर्षिव्यासमतेन षोडशसंस्कारा: भवन्ति।

**गर्भाधानं पुंसवनं सीमन्तो जातकर्म च।**
**नामक्रिया निष्क्रमणोऽन्नाशनं वपनक्रिया॥**
**कर्णवेधो व्रतादेशे वेदारम्भक्रियाविधिः।**
**त्रेताग्नि( चिताग्नि )संग्रहश्चेति संस्काराः षोडशस्मृताः॥**

येषु संस्कारेष्वादित: नवसंस्कारपर्यन्तं स्त्रीणां कृते ऽपि पौराणिकै: मन्त्रै: संस्कारा: विहिता:। विवाहसंस्कार: समन्त्रकं कर्त्तव्यम्। विषयेऽस्मिन् व्यासस्मृतौ लिख्यते–

**नवैताः कर्णवेधान्ता मन्त्रवर्जक्रियाः स्त्रियः।**
**विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश॥**

महर्षि जातूकर्ण्येनापि षोडशोदिता परञ्च नामभेदोऽस्ति। गर्भधान-पुंसवन-सीमन्त- जातकर्म-नामकरण-अन्नप्राशन-चौलकर्म-मौंजीबन्धन-चतुर्वेदव्रत-केशान्त-समावर्त्तन-विवाह-अन्त्येष्टिश्च। एकादशसंस्कारा: मनुस्मृत्यनुसारेण तथा पारस्करगृह्यसूत्रानुसारेण द्वादशसंस्कारा: भवन्ति। अधिकारभेदेन अष्टौचत्वरिंशत्संस्कारा अपि वर्णितास्सन्ति।

येषां समेषां संस्काराणां सम्पादनं सम्यक् रीत्या कर्मकाण्डमाध्यमेनैव सम्पाद्यते। सर्वेषां संस्काराणां सम्पादनात् पूर्वं पंचांगपूजनस्य विधानमस्ति कर्मकाण्डे। पंचांगेऽस्मिन् गणेशाम्बिकापूजन-स्वस्तिपुण्याहवाचन-मातृकापूजन-नान्दीश्राद्ध-आचार्यादिवरणानि भवन्ति।

भारतीया संस्कृति: उत्तममानवानां निर्माणं संस्कारविधिना करोति। मानवजीवने संस्काराणां महत्त्वमवर्णनीयमस्ति। संस्कारै: न केवलं शुद्धयते अपितु बलवर्धनमपि क्रियते। न केवलमेतावता अपितु चरित्रनिर्माणादि विषयेऽपि संस्काराणां महत्त्वन्नास्ति प्रच्छन्नम्। विषयेऽस्मिन् बहूनि प्रमाणानि सन्ति यै एवमनुभूयते यत् भारतीयसंस्कृतौ कर्मकाण्डस्याति महत्वमस्ति।

---

१. मनुस्मृति: २/२८

# महिमभट्टमते ध्वनिखण्डनम्

**डा. नागराज्. बि.**

अखिलेऽस्मिन् साहित्यप्रपञ्चे सत्स्वपि नैकेषु अलङ्कारग्रन्थेषु, आनन्दवर्धनकृतः ध्वन्यालोकः मूर्धन्यस्थानं भजते। व्याकरणशास्त्रे पाणिनीयसूत्राणीव, वेदान्तशास्त्रे वेदान्तसूत्राणीव, साहित्ये सूत्रप्रायोऽयं ग्रन्थः ध्वन्यालोकः। अयं ध्वन्यालोकस्य प्रथमोद्योते "काव्यस्यात्मा ध्वनिरिति बुधैः" इत्यनेन ध्वनेः काव्यात्मत्वं उक्त्वा "यत्रार्थः शब्दो वा" इत्यनेन ध्वनेः लक्षणं प्रतिपादयति। ग्रन्थोऽयमपि परवर्तिभिः आलङ्कारिकैः तत्तन्मतानुसारं खण्डितः। तेषु सर्वप्रथमतः भट्टनायकः। अयं "हृदयदर्पणः" इत्यस्मिन् ग्रन्थे ध्वनेः खण्डनं कृतवान्। द्वितीयः व्यक्तिविवेककारः महिमभट्टः। अनेन ग्रन्थेऽस्मिन् ध्वनेः खण्डनं कृत्वा अनुमाने अन्तर्भाव्यते।

आहत्य त्रिभिः विमर्शैः युक्तेऽस्मिन् ग्रन्थे प्रथमविमर्शे ध्वनिलक्षणाक्षेपः, द्वितीये शब्दौचित्यविचारः, तृतीये ध्वन्युदाहरणानाम् अनुमानान्तर्भावोपदर्शनं विहितम्।

प्रकृतं प्रथमे विमर्शे महिमभट्टः व्यञ्जनायाः खण्डनं कृत्वा तं व्यङ्ग्यम् अर्थम् अनुमाने एव अन्तर्भावयति। एतत्तु ग्रन्थस्य शीर्षकद्वारा एव प्रतीयते। अत्र "व्यक्तिः" नाम व्यञ्जनाव्यापारः। विषयममुं ग्रन्थस्य मङ्गलाचरणद्वारा एव उद्घटयति। तद्यथा–

**"अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।**
**व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥"[१]** इति ।

एतन्मतानुसारं शब्दस्य अभिधाव्यापारः एकैव। अनन्तरदशायां अनुमानद्वारा अनुमेयार्थः स्फुरति। इत्थं महिमभट्टमतानुसारम् अर्थस्तावत् द्विविधः, वाच्यः अनुमेयश्चेति। व्यङ्ग्यार्थ इति तथाकथितः अर्थः अनुमानद्वारा गम्य एव। न तु व्यञ्जनावृत्तिबोध्यः। ध्वन्यालोके तावत् ध्वनिलक्षणकारिका इत्थं निरूपिता–

**"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥"[२]**

इति। लक्षणमिदं खण्डयित्वा स्वीयं लक्षणं कथयति महिमभट्टः। तद्यथा–

**"वाक्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति।**
**सम्बन्धः कुतश्चित् सा काव्यानुमितिरित्युक्ता॥"[३]**

---

१. व्यक्तिविवेकः १.१

२. ध्वन्यालोकः १.१३

३. व्यक्तिविवेकः १.२५

इत्युक्तौ, यत्र वाच्यार्थो वा अनुमितार्थो वा कस्यचन सम्बन्धद्वारा अर्थान्तरं प्रकाशयति तत्र तस्य "काव्यानुमितिः" इति अभिधानम्।

महिमभट्टः विमर्शेऽस्मिन् ध्वनिकारेण उक्तं ध्वनिलक्षणं क्रमशः खण्डयति।

**१ अर्थः-**

ध्वनिकारेण उक्तरीत्या अर्थस्य उपसर्जनीकृतात्मत्वं सर्वथा असिद्धम्। यतो हि तस्य अर्थान्तरप्रतीत्यर्थमुपात्तस्य तद्व्यभिचाराभावात्। यथा अग्न्यादिसिद्धौ धूमः गुणतां न प्राप्नोति तथा अर्थस्य उपर्जनीकृतात्मत्वं न सम्भवति।

**२. शब्दः-**

शब्दस्य स्वार्थाभिधानमन्तरेण व्यापारान्तरानुपपत्तेरुपपादयिष्यमाणत्वात् शब्दोऽपि अनुपादेय एव इति शब्दस्य उपर्जनीकृतार्थत्वं खण्डयति। अतः शब्दः अर्थान्तरस्य द्योतनार्थं सर्वथा स्वीयम् अर्थं न उपसर्जनीकरोति। यदि उपसर्जनत्वं भवति तर्हि अनुकरणशब्देषु एव। यथा-

**"तं कर्णमूलमागत्य फलितच्छद्मना जरा।**
**कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति॥"**

इत्यादौ। तर्हि अर्थावगतिः कुतः? अनुकार्यात् इति चेत् तदपि न। यतो हि तस्य "सार्थक्त्व"-"निरर्थकत्व" रूपेण द्वैविध्यात्।

सार्थकत्वं यथा -**"हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मित्"** इत्यादौ।

निरर्थकत्वं यथा -**"दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ताः वनान्ताः"** इत्यादौ।

**३. उपसर्जनीभावः-**

ध्वनिलक्षणे उक्तरीत्या शब्दार्थयोः उपसर्जनीभावः अपि न सम्भवति। यतो हि यः यदर्थम् उपादीयत नासौ तमेव उपसर्जनीकरोति। यथा- उदकाद्युपादानार्थम् उपात्तो घटः न गुणतां प्राप्नोति।

अपि च अविवक्षितवाच्यध्वनेः उदाहरणे-

**"सुवर्णपुष्पां पृथिवीं चिनन्वन्ति पुरुषास्त्रयः।**
**शूरश्च कृतविद्याश्च यश्च जानाति सेवितुम्॥"**

इत्यत्र व्यङ्ग्यव्यञ्जकभावः सर्वथा नास्तीति खण्डयति।

**४. व्यङ्क्तः-**

अत्र महिमभट्टः **"सर्व एव हि शब्दो व्यवहारः साध्यसाधनभावगर्भतया प्रायेण अनुमानरूपोऽभ्युपगन्तव्यः"** इति वदन् अत्र नितरां साध्यसाधनभावेन अनुमान एवेति "व्यङ्क्तः" इति खण्डयति।

महिमभट्टः पुनः अर्थनिरूपणविभागे अपि अमुमेव विषयं निरूपयति। तन्मतानुसारम् अर्थो वाच्यः अनुमेयश्चेति द्विविधः। तत्र शब्दव्यापारविषयो वाच्यः। स एव मुख्य उच्यते। यदाहुः–

**"श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।**
**तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम्।।" इति।**

इत्थम् अर्थान्तरं वस्तुमात्रम्, अलङ्काररूपम्, रसादिः इति त्रिविधम्। वस्तुमात्रं तु वाच्यमपि भवति। अलङ्कारः रसादिश्च केवलमनुमानमेव। अपि च तत्र पदस्यार्थो वाच्य एव नानुमेयः, तस्य निरंशत्वात् साध्यसाधनभावाभावतः।

अपि च अयं साध्यसाधनभावः प्रमाणमूलः। तच्च प्रमाणं त्रिविधम्। यदाहुः-

**"लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्।"** तत्र लोकप्रसिद्धार्थस्य उदाहरणम्-

यथा-

**"कयासि कामिन् सुरतापराधः पादानतः कोपनयावधूतः।**
**यस्याः करिष्यामि दृढानतापं प्रवालशय्याशरणं शरीरम्।।"**

वेदमूलत्वं यथा-

**"अयाचितारं न हि देवमद्रिः सुतां प्रतिग्राहयितुं शशाक।**
**अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्भतेऽर्थे।।"**

अध्यात्ममूलं यथा-

**"पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोक्तः।**
**कमपरवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः।"**

अनन्तरं ध्वनिलक्षणे वियमानान् दशदोषान् निरूपयितुम् उपक्रमते। यथा-

**"अर्थस्य विशिष्टत्वं शब्दः सविशेषणस्तदः पुंस्त्वम्।**
**द्विवचनवाशब्दौ च, व्यक्तिर्ध्वनिर्नाम, काव्यवैशिष्ट्यम्।।"[४]**

**"वचनं च कथनकर्तुः, कथिता ध्वनिलक्ष्मणीति दशदोषाः।**
**येत्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः।।"[५]** इति।

अत्र अर्थस्य विशेषणं, शब्दः, शब्दस्य विशेषणं, "तम्" इत्यत्र तत् शब्दस्य पुंसि प्रयोगः, व्यङ्क्तः इत्यत्र द्विवचनं, "वा" शब्दः, व्यक्तिः(व्यञ्जना), ध्वनिः इति नाम, काव्यविशेषः इत्यत्र विशेषशब्दस्य प्रयोगः, सूरिभिः कथितः इत्यत्र कर्तुः शब्देन उल्लेखः इत्येतां दशदोषान् उद्घटयति महिमभट्टः।

४. व्यक्तिविवेकः १.२३
५. व्यक्तिविवेकः १.२४

**एवं च स्वीयं काव्यलक्षणम् उपस्थापयति। यथा-**

**"तस्मात् स्फुटतया यन्न प्राधान्येनान्यथापि वा।**
**वाच्यशक्त्यानुमेयोऽर्थो भाति तत् काव्यमुच्यते॥"** इति[६]

अतः यत्र प्राधान्येन, अप्राधान्येन वा वाच्येन स्फुटतया(स्पष्टतया) अनुमेयार्थः भाति तत्र तत् काव्यम् इत्युच्यते। अपि च-

**"पक्षधर्मत्वसम्बन्धव्याप्तिसिद्धिव्यपेक्षणात्।**
**वृक्षत्वाग्रत्वयोर्यद्वद् यद्वच्चानलधूमयोः॥"[७]**
**"अनुमानत्वमेवात्र युक्तं तल्लक्षणान्वयात्।**
**असतश्चेन्द्रचापादेः का व्यक्तिः कृतिरेव सा॥"[८]**

अत्र अनुमानस्य अङ्गद्वयं, पक्षधर्मता तथा व्याप्तिः। यथा धूमः, अग्निः इत्यादि व्याप्तेः साध्यस्य सिद्धिर्भवति, अतः पूर्ववत् अत्रापि अनुमानं निर्बाधम्।

अपि च-

**"न च युक्तिनिराशंसा ततः कश्चित् प्रवर्तते।**
**निवर्तते वेत्यस्येष्टा साध्यसाधनगर्भता॥"[९]**

इति कथयति।

इत्थं एकस्य शब्दस्य अर्थान्तराणां सत्त्वे तान् अर्थान्तरान् अनुमानमेव बोधयतीति महिमभट्टस्य मतम्।

एवं सुप्रसिद्धं ध्वन्यालोकं स्वीययुक्तिप्रदर्शनद्वारा सलक्षणं धैर्येण खण्डयति।

परन्तु अनुयायिनां साहित्ये सम्प्रदायोऽयं न प्राथितः।

---

६. व्यक्तिविवेकः १.३२
७. व्यक्तिविवेकः १.३४
८. व्यक्तिविवेकः १.३५
९. व्यक्तिविवेकः १.३८

# काव्यात्मरूपेण रसविचार:

**श्री कुन्दनकुमार:**

भारतीयवाङ्मये 'आत्मन्' इत्येतत् पदं बहुविधार्थेषु प्रयुक्तमस्ति। वेदवेदान्तादिशास्त्रेषु तु अस्य महती चर्चा कृता-

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥[१]**

**अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥[२]**

**अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च॥[३]**

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यम्।**
**अन्तः शरीरे ज्योतिर्मयो हि शमोऽयम् पश्यन्ति यतयः क्षीणदोषाः॥[४]**

**चैतन्यम् आत्मा।[५] ज्ञानाधिकरणमात्मा।[६]**

एवं प्रकारेण प्रायशः प्राणचेतनयोरर्थे आत्मेति शब्दः व्यवह्रियते। साहित्यशास्त्रे तु तत्प्रयोगो लाक्षणिकरूपेण कृतोऽस्ति।

**'काव्यस्यात्मा'** इत्येतेन काव्यस्य तत्त्वं सारो वा इत्येषोऽर्थोऽभिप्रेतः। आत्मास्ति तत् तत्त्वं येन काव्यं काव्यत्माप्नोति। तद्द्वारेण सहृदया वा दर्शकाः श्रोतारो वाध्येतारः काव्यस्य प्रमुखप्रयोजनभूतकाव्यानन्दं वा रसमनुभवन्ति। निःसंशयं काव्ये आत्मा इत्येषः शब्दो वाचकत्वेन नापितु लक्षणत्वेन प्रयुक्तोऽस्ति। तस्य वाच्यार्थतास्ति चेतनता ज्ञानं वा, परमिह तल्लक्ष्यार्थः काव्यस्यानिवार्यतत्त्वम्। काव्ये आत्मेति शब्दः काव्यस्यानिवार्यव्यापकाभ्यन्तरसारो वा तत्त्वमिति ज्ञेयम्।

साहित्यशास्त्रे काव्यात्मविचारः प्रायः सर्वैरपि काव्याशास्त्रिभिः कृतः। तत्रादौ वामनः **'रीतिरात्मा काव्यस्य'**[७] इति निगदन् रीतिमेव काव्यात्मरूपेण स्वीकरोति।

---

१. गीता २/२०
२. कठ. २/२२
३. कठ. ५/९
४. मुण्डकोपनिषद् ३/१
५. शिवसूत्रम् ईश्वरप्रत्यभिज्ञादर्शिनी व्याख्या भास्करी टीका, पृ. २४५
६. तर्कसंग्रह
७. का. सू. २/६

आनन्दवर्धनाचार्यः **'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः'**[१] इति व्याहरन् ध्वनिमेव काव्यस्यात्मरूपेण प्रतिपाद्यते।

राजशेखरः काव्यमीमांसायां काव्यपुरुषं साङ्गोपाङ्गं प्रस्तौति-

**'शब्दार्थौ ते शरीरम्, संस्कृतं मुखम् ........ रस आत्मा, रोमाणि छन्दांसि ........ अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति।'**[२]

अत्र 'रस आत्मा' इत्यनेन काव्ये रसस्य आत्मत्वम् उरीकरोति।

रसवादी मम्मटोऽपि गुणलक्षणे 'ये रसस्याङ्गिनो धर्माः' इति भाषमाणो रसस्य काव्ये प्राधान्यं दर्शयति। तन्मतानुसारं काव्ये रसो मुख्यो भवति। दोषप्रकरणे रसस्य मुख्यत्वमुद्घोषयन् आचार्यमम्मटः उद्घोषयति-

**'मुख्यार्थहतिर्दोषः, रसश्च मुख्यः।'**[३]

**'वाक्यं रसात्मकं काव्यम्'** इति विश्वनाथः स्वसाहित्यदर्पणगते काव्यलक्षणे रसस्यात्मतत्त्वं घोषयति, तेन न केवलं अन्यैराचार्यैरिव रसस्यात्मतत्त्वमेव लक्षणे प्रस्थापितम् अपितु रसात्मनो निवासयोग्यं काव्यस्य पुरुषत्वमपि रूपकेन प्रतिपादितम्-

**'काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत्, इति।'**[४]

तेन रसास्वादनप्रक्रियायां स्पष्टमनूदिता-

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥**

**लोकोत्तरचमत्कारप्राणाः कैश्चित्प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥**[५]

इत्यादिना रसस्याखण्डता स्वप्रकाशकता चिन्मयता वेद्यान्तरस्पर्शशून्यता ब्रह्मास्वादसहोदरता स्वाकारत्वदभिन्नता चेति रसस्यात्मधर्मत्वमेव प्रख्यापयति विश्वनाथः।

अलङ्कारकौस्तुभे कविकर्णपूरेणापि **'शरीरं शब्दार्थौ ध्वनिरसवः आत्मा किल रसः'**।[६] इत्यादिना काव्यपुरुषस्य शब्दार्थौ शरीरं ध्वनिः प्राणाः रसश्चात्मेति स्वीकृतम्।

---

१. ध्व. १/१
२. का. मी. अ. ३
३. का. प्र. का. ४९
४. सा. द. पृ. १६
५. सा. द. ३/२,३
६. अ. कौ. १/१४

पण्डितराजजगन्नाथेन रसगङ्गाधरे मम्मटोक्ता-'व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः' इति कारिका सविस्तरं व्याख्याता। निष्कर्षे च-

**'इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणाचिद्विशिष्टो रत्यादिः स्थायिभावो रस इति स्थितम्'।**[१]

पूर्वाचार्याणां मतं प्रदर्श्य निजमते आत्मनः एव रसत्वं प्रतिपादितम्-

**'वस्तुतः तु रसो वै सः इत्यादिवक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्नाभग्नाऽऽवरणादि चिदेव रसः'।**[२] इति।

अर्थात् चिदात्मा स्वतः सिद्धः आनन्दरूपो रसरूपो वा श्रुतिभिः प्रतिपादितः। सेयं रसरूपचिदात्मा रजस्तमोभ्यामावृतः सन् न प्रकाशते यदा विभावादिभिः काव्यव्यापारेण तदावरणं भज्यते तदा रत्यादिषु चित्प्रकाशते चर्व्यते, आस्वाद्यते रस्यते वा अर्थादात्मनः आवरणभङ्ग एव रसास्वादनं भवति-

**'चर्वणा चास्य चिद्गतावरणभङ्ग एव प्रागुक्ता'**[३]

एवं रसरूपायाश्चित्तः पुनरावरणे जातं विद्यमानोऽपि रत्यादिः स्थायी न रसरूपतां याति। उक्तञ्च-

**'आवरणभङ्गस्य निवृत्तायां तस्यां प्रकाशस्यावृतत्वाद्विद्यमानोऽपि स्थायी न प्रकाशते।'**[४]

इत्थं पण्डितराजेनाद्वैतवेदान्तसिद्धान्तेन काव्यगतरसस्यात्मत्वं पूर्णरूपेण प्रतिपादितम्।

अभिनवगुप्तेनापि वस्त्वलङ्काररसानां व्यङ्ग्यत्वप्रतिपादनपुरस्सरं रसस्य नित्यव्यङ्ग्यत्वमात्मत्वं च कथितम्-

**'यस्तु स्वप्नेऽपि न स्वशब्दवाच्यः .......... स्वसंविदानन्दचर्वणाव्यापाररसनीय- रूपो रसः स काव्यव्यापारैकगोचरो रसध्वनिरिति, स च ध्वनिरेवैति स एव मुख्यतयात्मेति।'**[५]

उपर्युक्तेषु सर्वेषु काव्यात्मवादेषु आद्यत्वाद्बहुसम्मतत्वाद्रसध्वनिः काव्यस्यात्मेति प्रतिपाद्यते। काव्यस्य शब्दार्थशरीरस्था बाह्यशोभासम्पादका अलङ्कारा आभ्यन्तरगतं तत्त्वमात्मत्वं कथमपि न प्राप्तुं प्रभवन्ति। माधुर्यादिगुणानाश्रिता वैदर्भ्यादिरीतिरपि शरीरावयवसंस्थानविशेष एव तस्या अपि नान्तः स्थितिः इति सापि बाह्यत्वादात्मत्वं नार्हति। भामहादिमतेनालङ्कार- सामान्यापरवर्तिकालेऽलङ्कारविशेषरूपा वक्रोक्तिरलङ्कारत्वेनैव तिष्ठतीति सापि काव्यात्मत्वं नार्हति। कुन्तकप्रतिपादिता वक्रोक्तिः काव्यस्य सर्वाङ्गव्यापकत्वं लभेत् चेत्तर्हि प्रहेलिकायामपि वक्रोक्तिप्राधान्यादुत्तमकाव्यत्वं स्यात्, परन्तु रसान्तरायहेतोस्तस्यालङ्कारत्वमपि निषिध्यते-

---

१. र. ग., पृ. ६९
२. र. ग., पृ. ९६
३. र. ग., पृ. ९६
४. र. ग. ९३
५. लोचन पृ. ८१

**'रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका'।**[1]

कुतस्तस्याः काव्यत्वमिति। तस्मादलङ्काररीत्योरिव वक्रोक्त्या अपि काव्यात्मभूतस्य रसस्योपकारितामात्रं सिद्धं न तु काव्यात्मत्वम्। काव्यगतसर्वाङ्गव्यापिन औचित्यस्यापि व्यवधानरहिता रसोपलब्धिरेव प्रयोजनम् अतः साध्यतत्त्वमौचित्यं साधनमेव। तस्मान्नौचित्यं काव्यात्मस्थानीयमर्हति। अलङ्काररीतिवक्रोक्त्यौचित्यचतुष्टयस्य काव्यात्मत्वं परवर्तिकाले सर्वथा निरस्तमेव विवेचकैः तस्मान्न प्रपञ्च्यते।

काव्यस्यात्मा ध्वनि रसो वेति प्रश्नोऽद्यावधि काव्यशास्त्रिणां पुरः परिस्फुरति। यद्यपि ध्वनिवादिभिः ध्वनित्रये रसध्वनेर्वैशिष्ट्यं स्वीक्रियते तथापि वस्त्वलङ्कारध्वन्योरप्यात्मत्वं तैः प्रतिपादितमेव।

वस्त्वलङ्काराभ्यां व्यङ्ग्यरूपे तयोश्चमत्काराधिक्यं सौन्दर्यं च भवत्येव। 'परोक्षप्रिया हि देवाः प्रत्यक्षाद्विषः' इत्युक्तिः काव्यशास्त्रे चरितार्थीभूता जायते। परन्तु ध्वनिसिद्धान्तेऽपि रसोपकारकतयैवालङ्कारस्यालङ्कारत्वं प्रतिपाद्यते–

**रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः॥**[2]

रसाभावेऽलङ्कारविधानं शवशरीरस्थमाभूषणमिव न शोभते। तस्मादलङ्कारप्रधानं काव्यं चित्रमित्युच्यते। तथा काव्यगतगुणा अपि रसस्यैवाऽऽख्यायन्ते न वस्त्वलंकारयोः। ध्वनिकारानन्दवर्धनेनापि माधुर्यादिगुणाः शृङ्गारादिरसाश्रिततयैव प्रतिपादिताः –

**शृङ्गार एव मधुरः परः प्रह्लादनो रसः।**
**तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति॥**

**शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः॥**

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।**
**तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥**

**समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।**
**स प्रसादौ गुणो ज्ञेयः सर्वसाधारणक्रियः॥**[3]

अतो ध्वनिकारमतेनापि काव्ये रसस्यैव गुणित्वमलङ्कारत्वं च सिद्ध्यति। ध्वन्यालोकस्य प्रथमश्लोकवृत्यन्ते वर्णयति–

**'तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूतम्, अतिरमणीयम्, अणीयसीभिरपि चिरन्तनकाव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्, अथ च रामायणमहाभारतप्रभृतिनि**

१. सा. द. १०/१३

२. ध्व. ३/१६

३. ध्व. १/७,८,९,१०

**लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानन्दो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते।'**[१]

इत्यस्य व्याख्यायामभिनवगुप्तः लोचनटीकायामाचक्षते-

**योऽर्थो हृदयसंवादी तस्य भावी रसोद्भवः।**
**शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना॥**[२]

पुनश्च कारिकायाः 'आनन्द' इति शब्दस्य लोचने व्याख्यां करोति-

**'रसचर्वणात्मनः प्राधान्यं दर्शयन् रसध्वनेरेव सर्वत्र मुख्यभूतमात्मत्वमिति दर्शयति।'**[३]

पुनः 'काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थः'[४] इत्यादौ ध्वन्यालोकस्थ द्वितीयश्लोकवृत्तिव्याख्यायाम् लोचनकारः 'उचितशब्देन रसविषयमेवौचित्यं भवतीति दर्शयन् रसध्वनेर्जीविततत्त्वं सूचयति'[५] तथैव -

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥**[६]

अस्मिन् श्लोके काव्यस्यात्मेति पदस्य वृत्तिं लिखति-

**'विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारभूतः।'**[७]

अपरत्र च ''तथा ह्यभिधाभावनारसचर्वणात्मकेऽपि त्र्यंशे काव्ये रसचर्वणा तावज्जीवितभूतेति भवतोऽप्यविवादोऽस्ति''।[८]

'ध्वनिकारस्य रसात्मपरत्वमुद्घाटितम्। इति रसेनैव सर्वं जीवति काव्यम्।'[९]

इति वाक्येनापि रसस्य काव्यजीवितत्वं स्वीकृतम्। अपरत्र '............. चित्स्वभाव-निवृत्तिविश्रान्तिलक्षणः परब्रह्मास्वादसविधः। स एव च प्रधानभूतोऽंशः सिद्धरूपः'[१०] इति रसस्यात्मतत्त्वं प्रतिपादितम्।

माधुर्यादिगुणप्रसङ्गेऽपि रसस्यात्मत्वं प्रतिपादितम् **'......... अपि त्वात्मभूतस्य रसस्यैव परमार्थतो गुणा माधुर्यादयः।'**[११]

---

१. ध्व. पृ. ५५
२. ध्व. पृ. ५९
३. तत्रैव पृ. ५९
४. तत्रैव १/२
५. तत्रैव पृ. ६७
६. तत्रैव १/२
७. तत्रैव १/५
८. ध्व. पृ. ६०
९. तत्रैव पृ. ३७०
१०. ध्व. लोचन पृ. ३८३
११. तत्रैव २/८ पृ. ४५५

इत्येवं ध्वनिसम्प्रदायस्य विशिष्टाचार्याभिनवगुप्तेन ध्वन्यालोकस्य व्याख्यायामेव रसध्वनेरात्मत्वं स्पष्टतया प्रतिपादितम्। तथा च **'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।'**[१]

**'काव्यस्यात्मनि संज्ञिनि रसादिरूपे न कस्यचिद्विमतिः'**[२]

**'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।'**[३]

**'वाक्यं रसात्मकं काव्यम्'**[४]

इत्यादिभिः पूर्वापरैर्ध्वनिवादिभिः प्रतिवादिभिश्च काव्यशास्त्रकोविदं रसस्यात्मत्वं तारस्वरेणौद्घोषितं तदा रस एव काव्यात्मत्वे मूर्धाभिषिक्तं इति प्रमाणितो भवति।

को वा रसः? केन व्यापारेण कया शक्त्या वाऽवगम्यते इति प्रश्ने जाते विभावानुभाव-व्यभिचारिभिरभिव्यक्तः स्थायी भावो रसः ध्वनिव्यापारेण व्यञ्जनाशक्त्या वृत्या वाऽभिव्यज्यते। विना ध्वनिं तस्याभिव्यक्तिर्न संभवति तस्मात् ध्वनिरसयोः प्राणात्मनोरिव नित्यः समवायसम्बन्धः। अतो रस एव रसध्वनिः। स एव काव्यशास्त्रे आत्मत्वेन प्रतिष्ठितः।

---

१. अग्निपुराणम्, ३३६/३३

२. व्यक्तिविवेकः, प्रथमविमर्शः

३. का. प्र. ८/६६

४. सा. द. १/३

# अपराधविषये प्राचीनशासकानां न्यायव्यवस्था

**डॉ० सुधांशुभूषणपण्डा**

आहारनिद्राभयमैथुनादिभिः साम्यत्वे सति मनुष्यः इतरेषु प्राणीषु भिन्नः। धर्म एव मनुष्यस्य भेदत्वे प्रमुखः कारणभूतः। पञ्चतन्त्रकाराणां मतानुसारम्–

> [1]**आहारनिद्राभयमैथुनं च सामान्यमेतद् पशुभिर्नराणाम्।**
> **धर्मो हि तेषामधिको विशेषः धर्मेण हीनाः पशुभिः समानाः।।**

अर्थात् कर्त्तव्याकर्तव्यस्य बोधः, आचारव्यवहारप्रायश्चित्तानां निर्णयः, सामाजिकविधिव्यवस्थायाः, प्रकल्पनं, समाजस्य तस्य सञ्चालनं, सामाजिकानां लोकानां कृते नीतिनिर्धारणं, नियमप्रवर्त्तनं, नीतिनियमानाञ्च यथोपयुक्तरूपेण प्रवर्तनं, तेन मनुष्यस्य अभ्युदयनिष्पादनं, तन्माध्यमेन धर्मार्थकामानां संस्थापनञ्च मनुष्यस्य परमतमानि धेयानि भवन्ति। धर्मार्थकामोपयोगाद् मोक्षावाप्ति एव अस्य चरमतमं लक्ष्यम्। आदिमनुयुगादारभ्य अद्यावधि मनुष्यः सामाजिकसुरक्षायै, आत्मरक्षायै, वंशवृद्ध्यर्थं तेन च आभ्युदयिकानामवाप्तये समाजस्य निर्माणं करोति। व्यष्टेः समष्टेश्चिन्तनं मानवस्य क्रमविकासस्य परिणामः।

> [2]**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।**
> **देवाभागं यथा पूर्वे संजानाना उपासते।।**

इति वैदिकी परम्परा अस्य परिचायिका भवति।

> [3]**अयं निजः परो वेति गणना लघुचेतसाम्।**
> **उदारचरितानान्तु वसुधैव कुटुम्बकम्।।**

इतीदं वचनं मानवस्य विश्वभ्रातृत्वबोधं प्रकटयति। "सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः" प्रभृतिवचनानि अप्यस्य प्रामाण्यमावहन्ति। यद्वास्तु सर्वमेतद् सम्भवति मानवस्य सामाजिकसंरचनाकारणात्।

वैदिकसभ्यता–मोहनजोदाड़ोहड़प्पासभ्यता–उत्तरवैदिकसभ्यता–गुप्तयुगीनकालप्रभृतिषु भारतीय–परम्परा सामाजिकविधिव्यवस्थानिर्माणाय स्वकीयमुद्घोषं संस्थापयति। राष्ट्रे जागृयामः राष्ट्रदा राष्ट्रं मे देहि, सोमोऽस्माकं ब्राह्मणानां ४ं राजा (शु. य. ९.४०), महते जानराज्याय (शु. य. ९.४०), वरूणः पस्त्यास्वा साम्राज्याय सुक्रतुः (शु. य. १०.३०), राजा वै राजसूयेनेष्ट्वा भवति। साम्राट् वाजपेयेन

---

१. हितो. प्रस्ता - २५

२. ऋ. सं. सू. - १०.१८९.२

३. मित्रलाभः - ७०

अवर ꣳ हि राज्यं परं साम्राज्यं (मा.शत. ५.१.१.१३), वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं में देहि, या हि राजे वामवारिभेन (शु.य. ३.९) विश्वास्त्वा प्रजा उपावरोहन्तु (शु.य. ६.२६), अग्निदूतं हवामहे इत्यादिवचनानि भारतीयपरम्परायां राजतन्त्रराज्यशासनप्रभृतीनां महत्वं प्रकटयन्ति। भारतवर्ष एव तादृशः देशः यस्माल्लोकाः आत्मचरित्रावगाहनं कुर्वन्ति कारयन्ति च समग्रं विश्वम्। भगवता मनुना विषयेऽस्मिन् स्वाभिमतं प्रकटितवन्तः यत्–

**एतद्देशप्रसूतस्य सकाशदग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्व मानवाः।।** इति। (मनु. स्मृ. २।२०)

सामाजिकविधिव्यवस्थायाः सुष्ठुपरिचालनायै शासनस्य आवश्यकता वर्तते। साम्प्रतिके काले प्रायशः समग्रेषु विश्वेषु गणतन्त्रशासनस्य प्रचलनं दृश्यते। प्राचीने भारते परन्तु राजतन्त्रस्य प्रचलनमासीत्। संस्कृतवाङ्मयेषु विषयेऽस्मिन् वाहुल्येन चर्चा कृता वर्तते। षड्स्मार्त्तधर्मेषु गुणधर्मोऽन्यतमः। उक्तञ्च विज्ञानेश्वरेण शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापरिपालनं परमो धर्मः। तच्च दुष्टनिग्रहमन्तरेण न सम्मवति। दुष्टनिग्रहं तु व्यवहारदर्शनमन्तरेण।[1]

अत्र अभिषेकगुणत्वेन महोत्साह–स्थूललक्ष–कृतज्ञ–वृद्धसेवक–प्रभृतय गुणाः गृह्यन्ते। उक्तञ्च याज्ञवल्क्येन–

**महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः।**
**विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक्शुचिः।।**

**अदीर्घसूत्रः स्मृतिमान् क्षुद्रोऽपरूषस्तथा।**
**धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्।।**

**स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च।**
**विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः।।** (या. स्मृ. ३०९-३११)

अत्र पुरूषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः, महानुत्साहो यस्यासौ महोत्साहः, बहुदेशार्थदर्शी स्थूललक्षः, परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः, तपोज्ञानादिवृद्धानां सेवकः वृद्धसेवकः, विनयेन युक्तो विनीतः, सत्त्वसम्पन्नः सम्पदापदोहर्षविषादरहितः, मातृतः पितृतश्चाभिजनवान् कुलीनः, सत्यवाक् सत्यवचनशीलः। शुचिर्बाह्याभ्यन्तरशौचयुक्तः। अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां च समापने यो न विलम्बतेऽसावदीर्धसूत्रः, अधिगतार्थाऽविस्मरणशीलः स्मृतिमान्, अक्षुद्रोऽसद्गुणद्वेषी, अपरूषः परदोषाकीर्तनशीलः, धार्मिको वर्णाश्रमधर्मान्वितः, न विद्यन्ते व्यसनानि यस्यासावव्यसनः। व्यसनानि चाष्टादश। यथाह मनुः–

**मृगयाऽक्षो दिवास्वप्नः परिवादः स्त्रियो मदः।**
**तौर्यत्रिकं वृथाट्या च कामजो दशको गणः।।**

१. याज्ञ. स्मृ. मिता. पृ. – १६३

**पैशुन्यं साहसं द्रोहं ईर्ष्यासूयार्थदूषणम्।**
**वाग्दण्डजं च पारूष्यं क्रोधजोऽपि गणोऽष्टकः।।** (मनु. ७.४७-४८) इति।

तत्र च सप्त कष्टतमानि। यथाह मनुः-

**पानमक्षाः स्त्रिश्चैव मृगया च यथाक्रमम्।**
**एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे।।**

**दण्डस्य पातनं चैव वाक्पारूयार्थदूषणे।**
**क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा।।** (मनु. ७.५०-५१) इति।

प्राज्ञो गम्भीरार्थावधारणक्षमः, शूरो निर्भयः, रहस्यवित् गोपनीयार्थगोपनचतुरः, स्वरन्ध्रगोप्ता यस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तत्स्वरन्ध्रं; तस्य गोप्ता प्रच्छादयिता। आन्वीक्षिक्यामात्मविद्यायां दण्डनीत्यामर्थयोगक्षेमोपयोगिन्यां वार्तायां कृषिवाणिज्यपशुपालनरूपायां धनोपचयहेतुभूतायां, त्रय्यां ऋग्यजुः सामाख्यायां च विनीतस्तत्तदभिज्ञैः प्रावीण्यं नीतः। यथाह मनुः-

**त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं शाश्वतीम्।**
**आन्वीक्षिकीं चात्मविद्भ्यो वार्तारम्भांश्च लोकतः।।** इति। (मनु. ७.४३)

नराधिपो 'राज्याभिषक्तिः स्यात्' इति सर्वत्र सम्बन्धः। अतः एवम्भूत शास्त्रीयाभिषेकादिगुणयुक्तः राजा शासनं कुर्यात्। शासनसौकर्याय च दुष्टनिग्रहणस्यावश्यकता वर्तते। दुष्टनिग्रहं पुनः व्यवहारदर्शनेन सम्भवति। सर्वेषां लोकानां चरित्राणि यतो हि समानं भवितुं नार्हन्ति, न सर्वे सदैव पापं सदैव वा पुण्यं कर्तुं शक्नुवन्ति, निर्दिष्टानां सामाजिकविधिव्यवस्थानां विरूद्धाचरणेन चापराधः जायते। अपराधस्य तस्य निराकरणेन सामाजिकविधिव्यवस्था सुष्ठु प्रचलति। उक्तञ्च भगवता मनुना-

**अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः।।** (मनु. ७.३)

अतः कुल्लूकेनापि "यस्मादराजके जगति बलवत् भयात् सर्वतः प्रचलिते सर्वस्यास्य चराचरस्य रक्षाय राजानं सृष्टवांस्तस्मात्तेन रक्षणं कार्यम्।" (मन्वर्थ. ७.३) इत्युक्तम्। अर्थशास्त्रकारेण कौटल्येन राजाप्रजयोर्मध्ये सम्बन्धविश्लेषणं कृत्वा प्रपञ्चितं यत्-

[१]**प्रजा सुखे सुखं राज्ञः प्रजाानाञ्च प्रिये प्रियम्।**
**नात्मप्रियं प्रियं राज्ञः प्रजानान्तु प्रियं प्रियम्।।**

अपि च ब्राह्मणादीनां वर्णानां रक्षणं स्वधर्मस्थापनं राज्ञः परमं कर्त्तव्यं भवति। तदेव प्रपञ्चितं कौटल्येन-

**तस्मात् स्वधर्मभूतानां राजा न व्यभिचारभेत्।**
**स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति।।**

१. कौ. अ. शा. १.१९.६९

**व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।**
**त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति।।** (कोटल्य १.३.१६-१७)

**तत्रापि–**

[२]**चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।**
**स्वधर्मकर्माभिरतो वर्त्तते स्वेषु वेश्मषु।। इति।**

अस्माद् वचनात् चतुर्णां वर्णानां पालनं राजा दण्डपातनेन कुर्यादिति प्रतीयते। तदेव उपपादितमस्ति मार्कण्डेयपुराणे–

**राज्ञां शरीरग्रहणं न भोगाय महीपतेः।**
**क्लेशाय महते पृथ्वी स्वधर्मपरिपालने।।** इति। (मार्क. पुराण ३०.३३)

अतः विश्लेषणादस्माद् राज्ञः प्रजारक्षणं-भरणं-न्यायस्थापनं-इष्टापूर्ति-प्रभृत्यनुष्ठानानि परमकर्तव्यानि इति बोध्यन्ते। कविकुलगुरूणा कालिदासेन रघुवंशाख्ये महाकाव्ये वचनमिदं संस्मृतं यत्–

[३]**प्रजानां विनयाधानात् रक्षणात् भरणादपि।**
**स पिता पितरस्तेषां केवलं जन्महेतवः।।**

तर्हि सर्वेषां भरणरक्षणकारणाद् राजा पितृवत् वाच्यो भवति। तदिदमपि स्मृतं भगवता मनुना–
**"महती देवता ह्येषा नररूपेण तिष्ठति"** (मनु. ७.८)

तर्हि अपराधनिराकरणं दुष्टविनाशनं संथपालनं न्यायस्थापनं च राज्ञः कर्त्तव्यं भवति। तेन वै सुशासनं प्रतिष्ठापयितुं शक्यते।

अपराधशब्दः 'अप' उपसर्गात् 'राध्' धातोः भावे घञ् प्रत्यये कृते निष्पद्यते। व्यकर्यादिदोष एव अपराधः। अपराधविषये यद्यपि आगमप्रभृतिषु बह्वी चर्चाः दरिदृश्यन्ते। तथापि सामान्यव्यवस्थातिरिक्तं व्यवस्थां वा विहाय व्यवस्थाविरूद्धमेव अपराधः। तदिदमपि–

**श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः।**
**इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्।।** इति मनुना–(मनु. २.९)

भणितम्।

तर्हि अपराधनिराकरणं राज्ञः प्रथमं कर्म भवति। तदुक्तं याज्ञवल्क्येन–

**व्यवहारान्नुपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।**
**धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः।।** (याज्ञ.स्मृ. २.१)

---

२. कौ. अ. शा. १.४.१७

३. रघु. १.२४

अन्यविरोधेन स्वात्मसम्बन्धितया कथनस्य व्यवहारस्य दर्शनं प्रजापालनाधिकृतस्य राज्ञः कर्तव्यत्वात् पूर्वोक्तानां कर्मणामनुवादोऽयं धर्मः। तत्र विद्वद्भिर्वेदव्याकरणादिधर्मशास्त्राभिज्ञैः ब्राह्मणैः सह व्यवहारदर्शनं कुर्यात्। अत्र पुनः व्यवहारस्यास्य अदर्शने अन्यथा वा दर्शने राज्ञः दोषो भवति। उक्तञ्च मनुना–

**अदण्डयान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।**
**अयशो महदाप्नोति नरकं चैव गच्छति।।** (मनु. ८.१२८)

अत्र धर्मशास्त्रानुसारेण व्यवहारदर्शनं नाम न्यायस्थापना कर्त्तव्येति बोध्यते। देशादिसमयधर्मस्यापि धर्मशास्त्राविरूद्धस्य धर्मशास्त्रविषयत्वाद् न पृथगुपादानम्। उक्तञ्च याज्ञवल्क्येन–

**निजधर्माविरोधेन यस्तु सामयिको भवेत्।**
**सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः।।** (या. स्मृ. २.१८६)

गौतमश्चापि–

**"देशजातिकुलधर्माश्चाम्नायैरविरूद्धः प्रमाणम्।"** (गौतम २.२-२०)

इति वचनेन याज्ञवल्क्यं समर्थयति। अत्र धर्मशास्त्रानुसारेण विचारे भूते सति क्रोधलोभविवर्जित इति वचनमादरार्थमेव गृह्यते।

न राजा सदैव अपराधनिराकरणार्थं स्वयमेव व्यवहारदर्शनं कर्तुं शक्नुवति। कदाचिद् कार्यवशात् कदाचिद्अन्यकारणादन्यैः लोकैः व्यवहारदर्शनमपि कारयेत्। तदुक्तं याज्ञवल्क्येन–

**श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः।**
**राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः।।** (याज्ञ.स्मृ.२.२)

किञ्च श्रुताध्ययनसम्पन्नाः श्रुतेन मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन सम्पन्नाः, धर्मज्ञाः धर्मशास्त्रज्ञाः, सत्यवादिनः सत्यवचनशीलाः रिपौ मित्रे च ये समाः रागद्वेषादिरहिताः एवं भूता सभासदः सभायां संसदि यथा सीदन्त्युपविशन्ति तथा दानमानसत्कारैः राज्ञा कर्त्तव्याः। वृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह–

**लोकवेदज्ञधर्मज्ञाः सप्तपञ्च त्रयोऽपि वा।**
**यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा।।** (१.११)

न च ब्राह्मणैः सह इति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसम्पन्ना इत्यादि विशेषणमिति मन्तव्यम्, तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासम्भवात् विद्वद्भिरित्यनेन पुनरूक्तिप्रसङ्गाच्च। तथा च कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः–

**स प्राड्विवाकः समात्यः सब्राह्मणपुरोहितः।**
**ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः।।** इति।

तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु नियुक्ता इति भेदः। तत्र नियुक्तानां यथावस्थितार्थकथनेऽपि

यदि राजाऽन्यथा करोति तदाऽसौ निवारणीयः, अन्यथा दोषः। अनियुक्तानां पुनरन्यथाभिधानेऽनभिधाने वा दोषो न तु राज्ञोऽनिवारणे–

**सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।**
**अब्रुवन्विब्रुवन्वापि नरो भवति किल्विषी।।** (मनु. ८.१३)

इति मनुस्मरणात् रिपौ मित्रे च इति चकाराल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्यधिष्ठितं सदः कर्त्तव्यम्।

अतः प्राचीनभारते राज्ञः न्यायव्यवस्थाप्रतिपादनं यद्यपि प्रधानं कर्म आसीत् तथापि राज्ञा नियुक्तानां सभासदां ब्राह्मणानां पुरोहितानां प्राड्विवाकानामपि न्यायव्यवस्थादर्शनं धर्म्यं कर्त्तव्यमासीत्। राजा न केवलं करग्रहणं कृत्वा तस्योपयोगेन इष्टापूर्तिं कुर्यात्, अपितु सुष्ठु प्रजापरिपालनेन प्रजानां धर्मादपि अंशभाग भवति अयम्। तदुक्तं याज्ञवल्क्येन–

**पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन्।**
**सर्वदानाधिकं यस्मात्प्रजानां परिपालनम्।।** (याज्ञ.स्मृ. १.३३५)

न राजा अन्यायेन कोषवर्धनं कुर्यात्। प्रजापीडनेन सन्तापोत्पादनं वा विद्येत्। स एव राजा महतं फलमाप्नोति।

**अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत्।**
**सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः।।**

**प्रजापीडनसंतापात्समुद्भूतो हुताशनः।**
**राज्ञः कुलं श्रियं प्राणांश्चाऽदग्ध्वा न निवर्तते।।**

**य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने।**
**तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन्।।** (याज्ञ. स्मृ १.३४०-४१-४२)

न्यायव्यवस्थानिर्णयावसरे आदौ व्यवहारनिर्णयः कर्त्तव्यः। व्यवहारशब्दः 'वि' उपसर्गात् 'अव' उपसर्गात् 'हृ'धातोः 'घञ्' प्रत्यये कृते निष्पद्यते। तस्य लक्षणं बहुभिः धर्मशास्त्रकारैः विभिन्नेन उपायेन प्रतिपादितम्। योगीश्वरेण याज्ञवल्क्येन व्यवहारलक्षणमेवं निष्पादितं यत्–

**स्मृत्याचारव्यपेतेन मार्गेणाऽऽधर्षितः परैः।**
**आवेदयति चैद्राज्ञे व्यवहारपदं हि तत्।।** (याज्ञ. २.५)

[१]कात्यायनकृतं लक्षणं यत्–

**प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे।**
**साध्यमूलस्तु यो वादो व्यवहारः स उच्यते।।** इति।

१. का. स्मृ. सा. उद्धृनश्लोकः पृ-२५ ; अपरकि पृ. - ५९६ ; स्मृ. च - ३ पृ. १, वीर. पि. पृ. ५ ; परा. मा. ३ पृ. ६

तत्रापि तेनैव कात्यायनेन–

[१]**विनानार्थेऽव संदेहे हरणं हार उच्यते।**
**नानासंदेहहरणाद्व्यवहार इति स्मृतः।।** इति लक्षणं कृतम्।

हारितस्तु–

**स्वधर्मस्य यथा प्राप्तिः परधर्मस्य वर्जनम्।**
**न्यायेन क्रियते यत्तु व्यवहार स उच्यते।।** इति लक्षणं कृतम्।[२]

मिताक्षराकारेण विज्ञानेश्वरेण– "अन्यविरोधेन स्वात्मसम्वन्धितया कथनं नाम व्यवहार" इति लक्षणं कृतम्। यद्वास्तु कश्चिदिदं क्षेत्र मदियमिति कथयति अन्योऽपि तदेव क्षेत्रं मदियमित्यपि कथयति। अनयोर्मध्ये कः साधुः को वा असाधु इति निर्णयरूपको व्यापारो व्यवहारः। आवेदयति चेद्राज्ञे इत्यस्माद् वचनात् आवेदनमेव व्यवहारदर्शनस्य कृते प्रमुखं कारणं भवति। परन्तु स्त्री-सीमासुरक्षा-प्रभृतिषु क्षेत्रेषु राजा स्वयमपि व्यवहारं प्रचालयितुं शक्नुयादिति विज्ञानेश्वरः। (याज्ञ.स्मृ.मिता २.५)

व्यवहारोऽयं अष्टादशधा भवतीति भगवता मनुना प्रकीर्तितम्। यद्यथा–

**तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।**
**सम्भूय च समुत्थानं दत्तस्यानपाकर्म च।।**

**वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।**
**क्रयविक्रयानुशयो विवादः स्वामीपालयोः।।**

**सीमाविवादधर्मश्च पारूष्ये दण्डवाचिके।**
**स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च।।**

**स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।**
**पदान्यष्टादशैतानि व्यवहारस्थिताविह।।** (मनु. ८.४-७)

नायं व्यवहारः केवलमेव अष्टादशधा भवितुमर्हति। अष्टादशसंख्या अत्र न्यूनसंख्यावारणार्थं न तु अधिकसंख्या व्युदासार्थम्। व्यवहारस्यास्य शतशाखो भवितुर्महति। उक्तञ्च नारदेन–

**एषामेव प्रभेदोऽन्यो द्वात्रिंशदधिकं शतम्।**
**क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते।।** (नारद स्मृ. २०)

साध्यभेदेन विभक्तानां व्यवहाराणां निर्णयार्थं प्राचीनभारते पादचतुष्टयस्य आवश्यकता आसीत्। भाषा-उत्तर-क्रिया-साध्यसिद्धयात्मकपादयुक्तानां व्यवहाराणां निर्णयार्थमादावेव लिखितरूपकस्य आवेदनस्य अपेक्षा वर्तते। साक्षीप्रभृतिभिः विनिर्णिते व्यवहारे अन्ततो गत्वा दण्डविधानं भवति। साक्षिणः यदि

१. का. स्मृ. सारोद्धृतश्लोकः- २६, व्य. मा. पृ. - १८६, परा. मा. - ३ पृ - ७, मनु. मन्वर्ध. ८.१
२. या. स्यृ. मिता. २.१

सुसाक्षिणः स्युस्तर्हि अलम्। कूटसाक्षिस्थले पुनस्तन्निर्णयं कृत्वा तेषां कृतेऽपि दण्डविधानं क्रियते। साक्ष्याभावे भुक्त्यागमप्रभृतिप्रमाणाभावे च दिव्यप्रमाणस्य तदानीं ग्रहणमासीत्। तदपि दिव्यं धट-अग्नि-जल-विष-कोश-तण्डुल-तप्तमाष-फाल-धर्मजरूपकं भवति। व्यवहारनिर्णयानन्तरं दण्डपातनावसरे[१] सामर्थ्यं दृष्ट्वा व्यवहारस्य गुरूत्वं च दृष्ट्वा दण्डपातनं कुर्यादिति धर्मशास्त्रकाराः। गौतमेन[२]- "लधुषु लधुनि गुरूषु गुरूणी" इत्युक्त्वा सामर्थ्यानुसारं दण्डं दद्यादिति कथितम्। वस्तुतः दण्डः समीक्षानन्तरमेव राज्ञा प्रपातयितव्यः। उक्तञ्च मनुना-

**तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः।**
**यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु।।** (मनु. ७.१६)

वस्तुतः दण्डः प्रजा शास्ति, दण्डेन सर्वे रक्षिताः भवन्ति। सुप्तेषु जागर्ति अयं दण्डः। तस्मात् समीक्ष्य एव दण्डपातनं कुर्यात्। उक्तञ्च मनुना-

**समीक्ष्य स धृतः सम्यक्सर्वा रञ्जयति प्रजाः।**
**असमीक्ष्य प्रणीतस्तु विनाशयाति सर्वतः।।** (मनु. ७.१९)

न राजा कदाचित् न्यायव्यवस्थादर्शनकाले आत्मपरकं विवेचनं कुर्यात्। तत्रापि अमात्ये दण्ड आयत्त आसीत्। उक्तञ्ज मनुना-

**अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया।**
**नृपतौ कोशराष्ट्रे च दूते सन्धिविपर्ययौ।।** (मनु. ७.६५)

राजा स्वराष्ट्ररक्षाविषये न्यायवृत्तः सन् शस्त्रुषु भृशदण्डप्रदानं कृत्वा सुहृत्सु अजिह्मः व्यवहारञ्च कृत्वा स्निग्धेषु ब्राह्मणेषु क्षमान्वितः भवेदिति मनुना निर्दिष्टम्। यथा-

**स्वराष्ट्रे न्यायवृत्तः स्याद् भृशदण्डश्च शत्रुषु।**
**सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः।।** (मनु. ७.३२)

तत्रापि अपराधनिर्णयावसरे कुत्रचिद् भेदो दृश्यते। अपराधस्य उद्देश्यमपि तदानीं महत्वपूर्णं भवति। इच्छापूर्वकापराधादनिच्छापूर्वकस्य अपराधस्य कृते दण्डः न्यून भवति। न्यायव्यवस्था समाज-स्य श्रृंखलारक्षायै भवति। एतदपि राज्ञा द्रष्टव्यं यत् मुख्यपुरूषस्य प्रधानपुरूषस्य वा कृते न एतादृशः दण्डः प्रपातयेत् येन राष्ट्रे समाजे वा विश्रृंखला आगच्छेत्। स एव राजा महतं फलमाप्नोति यः खलु स्वशासनात् सुशासनं महत्तरं मनुते।

---

१. पुरूषशक्त्यपराधानुबन्धविज्ञानाद्दण्डनियोगः - गौ. ध. सू. २.३.४८

२. गौ. ध. सू. ३.१.१९

# स्मृतिकारेषु शौनकस्य स्थानम्

**कुमारी चन्द्रिका**

**"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः[१]"**

इति मनुवचनानुसारेण वेदस्य श्रुतिः धर्मशास्त्रस्य च स्मृतिरित्यपरा संज्ञा। यद्यपि सांख्यादिस्मृतयः कदाचित् स्मृतित्वेन परिकल्पिताः सन्ति तथापि धर्मशास्त्रे अर्थे स्मृतिशब्दः रूढ़ः। यौगिकस्य पङ्काज्जातानामन्येषां पङ्कजत्वे सति तत्र पङ्कजस्य यथा गौणत्वं पङ्कजे अर्थे पद्मस्य च मुख्यत्वं तथैव स्मृतीत्यर्थे धर्मशास्त्रार्थः मुख्यः सांख्यादयः स्मृतयश्च गौणाः।

उक्तञ्च[२]

**"सांख्यस्मृत्यास्ति संकोचो न वा वेदसमन्वये।**
**धर्मे वेदः सावकाशः संकोच्योनवकाशया॥**

**प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिर्मतिः।**
**अमूलाकापिली वाध्या न संकोचोनया ततः।**

वेदानन्तरं धर्मशास्त्रस्य प्रमाण्यं सर्वैः सनातनजगति स्वीक्रियते। तत्र सन्ति बहवः धर्मशास्त्रकाराः तेषु केचन स्मृतिकाराः केचन सूत्रकाराः अपरे भाष्यकारा अन्ये च निबन्धकाराः। साधारणतया आद्यधर्मशास्त्रकारत्वेन महेर्षेः मनोः प्राथम्यं स्वीक्रियते॥

[३]**मनुस्तु "यद् वै किञ्च मनुरवदत् तद् भेषजम्"** (तै.सं. २/२/१०/२)

**"मनुर्वै यत् किञ्चावदत् तत् भैषज्यायै"** (ता. २३/१६/१७)

गौतमादिषु[४] धर्मसूत्रेषु याज्ञवल्क्यादिषु स्मृतिषु च मनोर्नाम सश्रद्धं स्मर्यते। यद्यपि समालोचकाः *"त्रीणि एतानि अनर्दिश्यान्यनु", **"त्रीणी एतानि अनिर्देश्यानि मनुरिति" रूपेण पाठभेदं प्रदर्शयन्ति

१. म. स्मृ. २/१०
२. उत्तर मीमांसा (अ. २ अधिकरण १)
३. मनुस्मृति (भूमिका, पृ. ७)
४. त्रीणि प्रथमान्यनिर्देश्यान्मनु (३.३.७) गौ. धर्म.
* गौ. घ.सू. (मिताक्षराभाष्ये) २.३.७
** गौ. घ.सू. (मस्करीभाष्ये) २.३.७

तथापि मनुरपि।

[१]"शूद्रावेदी पतत्यत्रेरूतथ्यतनस्य च" इत्युक्त्वा

उतथ्यतनयत्वेन गौतमस्य स्वीकारं करोति। यद् वास्तु स्मृतिकारेषु मनोर्धर्मसूत्रकारेषु च गौतमस्य प्राथम्ये नास्ति विसम्वादः। सन्ति बहवः स्मृतिकाराः। भगवता याज्ञवल्कयेन

**[२]"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।**
**यमापस्ताम्बसंवर्ताः कात्यायनबृहस्पती॥**

**पराशरव्यासशङ्खलिखिता दक्षगौतमौ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥**

इति धर्मशास्त्रकाराणां नामानि गृहीतानि।

पराशराचार्येण पराशरस्मृतौ निम्नलिखितानां नामानि गृहीतानि। तद्यथा-

**[३]श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा।।**
**गार्गीया गौतमीयाश्च तथैवोशनसाः स्मृताः।**

**अत्रेर्विष्णोश्च संवर्ताद्दक्षादङ्गिरसस्तथा॥**
**शातातपाच्च हारीताद्याज्ञवल्क्यात्तथैव च।**

**आपस्तम्बकृता धर्माः शङ्खस्य लिखितस्य च॥**
**कात्यायनकृताश्चैव तथा प्राचेतसान्मुनेः।**

एतेषां स्मृतिकाराणां विभागीकरणमस्माभिः निम्नलिखितरूपेण कर्त्तुं शक्यते।

१. अतिप्राचीनस्मृतिकाराः

२. प्राचीनस्मृतिकाराः

३. नवीनाः स्मृतिकाराः

---

१. मनु. स्मृ. ३/१६
२. या. स्मृ. (आ. ४, ५)
३. या. स्मृ. (१२-१५) प्रथमोऽध्याय

सन्ति यद्यप्यनेके अतिप्राचीन-प्राचीन-मध्ययुगीयाधुनिकाः स्मृत्याचारविवेचकाः स्मृतिकर्त्तारः निबन्धारस्तेषु मनुयाज्ञवल्क्य-गौतमापस्तम्ब-बौधायन-बृहस्पतिप्रभृतिनां प्राचीनस्मृतिकर्तृणामन्तन्तरं शौनकस्य नाम सश्रद्धं श्रुयते।

धर्मशास्त्रे प्रमुखरूपेण आचारव्यवहारप्रायश्चित्तरूपकाणां तत्सम्बन्धीयानां कर्मानुष्ठानानाञ्च चर्चाः विधीयन्ते। यत्र मन्वादयो महर्षयः केवलं विधानमेव प्रमुखरूपेण निर्दिशन्ति तत्रैव याज्ञवल्क्यादयः विधानेन सह कर्मानुष्ठानमपि स्वीकुर्वन्ति। परन्तु एतेषु भिन्नाः केचन सन्ति धर्मशास्त्रकाराः, ये खलु समेषां पूर्ववर्त्तीनां मतानि आकल्प सम्यगनुष्ठाननिर्देशेन सह वैदिकानां सूक्तानां कर्मकाण्डोक्तानामनुष्ठानानाञ्च समावेशं कुर्वन्ति। तेषु शौनकः प्रमुखः। शुनकस्य अपत्यं पुमान् शौनकः। भृगुवंशीशुनकऋषिः अयं पुत्रः, प्रसिद्धश्च वैदिकाचार्यः। नैमिषारण्ये तेन द्वादशवर्षपर्यन्तमेकं यज्ञं चकार। यस्मिन्यज्ञे उग्रश्रवा महाभारतस्य कथां सुश्राव इति महाभारतस्य आदिपर्वणः[1] अनुशासनपर्वणश्च[2] ज्ञायते। द्वितीयमपि वर्णनं महाभारतस्य वनपर्वणः[3] प्राप्यते। युधिष्ठिरस्य वनगमनसमये तेन सह प्रचलतः ब्राह्मणस्य एकस्य नाम शौनकः आसीत्। सः युधिष्ठरं विवेकस्योपदेशं दत्तवान्।

तपश्चारयितुं युधिष्ठिरमपि तेन उपदेशं दत्तम्। शुनकऋषेः पुत्रः प्रमतेश्च पौत्रत्वेन प्रसिद्धेनानेन शौनकऋषिणा व्यासोक्ता कथाऽपि श्रुता। आश्वलायनस्य गुरू शौनकः नैमिषारण्ये द्वादशवर्षाणि यावत् यज्ञम् अकरोत्। यत्रोपस्थित उग्रश्रवा उपस्थितान् ऋषीन् महाभारतकथां सुश्राव इति पौराणिकसन्दर्भकोशात् ज्ञायते।

वस्तुतः शौनकस्य नाम कुत्रचित् वैदिकरूपेण कुत्रचित् च लौकिकरूपेण प्राप्यते। सर्वे धर्मशास्त्रकाराः स्मृतिनिबन्धभाष्यकाराश्च सश्रद्धमेनं स्मरन्ति। सोऽयं शौनकः शुनहोत्र - अराऽशौनक - अतिधन्वाशौनक - इन्द्रोतशौनक-आर्ष्टिषेणशौनक - कापेयशौनक - गृत्समदशौनक - भद्रशौनक - भार्गवशौनक - स्वैदायनशौनक - शौनक - वृद्धशौनक - शौनकीपुत्रप्रभृतिरूपेणापि स्मर्यते। कदाचित् शौनकोऽयं ऋग्मन्त्रदष्टाशौनकत्वेन शाखाप्रवर्तकत्वेन ऋग्वेदव्याख्याकारत्वेनापि गृह्यते। शौनकस्य विचारदशायां वेदभेदेन शौनकस्यापि भेदो दृश्यते। यथा ऋग्वेदीयशौनकः यजुर्वेदीयशौनकः, सामवेदीयशौनकः, आथर्वणशौनकश्चेति। एतदतिरिक्तं धर्मशास्त्रप्रवक्तृत्वेन शौनकस्य नाम अपि धर्मशास्त्रसाहित्यजगति सश्रद्धं गृह्यते। मनुस्मृतौ शौनकस्य नाम स्मृतिकाररूपेण उद्धृतमस्ति इति धर्मशास्त्रस्येतिहासग्रन्थकारेण

---

१. महा. आ. पर्व. १.१९
२. महा. अनु. पर्व. ३०.६५
३. महा. वन. पर्व. २.६४.८४

काणे[1] महाभागेन भणितम्। बृहस्पतिस्मृतौ[2] शौनकस्य नामोल्लेखमपि दृश्यते। प्रयोगपारिजाते[3] शौनकः उपस्मृतिकाररूपेण गृहीतोऽस्ति। हेमाद्रिणा अष्टादशस्मृतिकारेषु शौनकस्य गणना कृता ते च

**"विष्णुः पाराशरो दक्षस्संवर्त व्यासहारिताः।**
**शातातपो वसिष्ठश्च यमापस्तम्बगौतमाः॥**

**देवलः शंखलिखितौ भाद्वाजोशनात्रयः।**
**शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः॥**

शौनकोक्तं धर्मशास्त्रं शौनकस्मृतिन्नाम्नाऽपि उपलभ्यते। लघुशौनकस्मृतिः, शौनकस्मृतिः, वृद्धशौनकस्मृतिरित्येवं रूपेण तिस्र स्मृतयः शौनकस्य नाम्ना प्रचलिताः सन्ति। दौर्भाग्यवशात् एताषां स्मृतिनां प्रकाशनम् अद्यावधिर्नैव जातम्। शौनकस्मृतेः एकैव मातृका एशियाटिक्-सोसाइटी-मुम्बई-पुस्तकालये उपलभ्यते। मातृकायास्यां ये विषयाः आलोचिताः सन्ति ते एतादृशाः यथा- पुण्याहवाचनम्, अङ्कुरारोपणम्, कौतुकबन्धनम्, रजस्वलाशान्तिः, समागमविधिः, गर्भाधानम्, पुंसवनम्, सीमन्तोन्नयनम्, जातकर्म, मृतप्रजाजीवः, पुत्रोत्पादनविधिः, सुपुत्रोत्पादनविधिः, नामकरणम्, वैधृतिव्यतीपातयोगशान्तिः, ग्रहणोत्पन्नबालकस्य शान्तिः, निष्क्रमणम्, बालोपवेशनम्, चौलकर्म, उपनयनम्, भिक्षाचरणम्, अनुप्रवचनम्, मेधाजननम्, उपाकर्म, गोदानवाह, समावर्तनम्, विवाहभेदः, मधुपर्कः, कन्यादानम्, स्थालीपाकम्, ग्रहशान्तिः, श्राद्धम्, प्रायश्चित्तम्, अपमृत्युहोमप्रभृतयः।

शौनकीयधर्मशास्त्रपराम्परायां द्वितीयः कश्चित् ग्रन्थः शौनककारिकारूपेणाऽप्युपलभ्यते। यस्योपरि शोधकार्यं मया अधुना सम्पाद्यते।

शौनककारिकायाः तिस्रः मातृकाः सम्प्रति उपलभ्यन्ते। ताश्च

(१) Accession Number - 57/228 इति रूपेण भारत-इतिहास - संशोधन - मण्डल-पुण्यपत्तने विद्यते। यस्याः लिपिः देवनागरी भवति। परिमापनं च 10" x 3.5" भवति। ताड़पत्रेण वै एताः सर्वाः कारिकाः लिपिवद्धाः सन्ति।

(२) भण्डारकर-ओरिएण्टालरिसर्चइनस्टिट्युट्पूण्यपत्तने शौनककारिकायाः कार्गजनिर्मिता द्वितीया मातृका दृश्यते। अस्या Accession No. 313 एवं परिमापनं 19" x 8.3" भवति। लिपि अपि अस्या देवनागरी एव अस्ति।

---

१. ध. शा. इ. भा. ग. १ पृ. ४५
२. बृ. स्मृ. (बड़ौदासंस्करणम्), पृ. २२६
३. नारदः पुलहोगार्ग्यः पुलस्त्य शौनकः ऋतुः।
बौधायनो जातुकर्णो विश्वामित्र पितामहः (वीरमित्रोदय, परि. प्रकाशे उद्धृतः)

(३) असम्पूर्णरूपेण परिभाषात चतुर्दशाध्यायं यावत् तथैव भण्डारकर-ओरिएण्टल्रिसर्च इनस्टिट्यूट-पूण्यपत्तने अस्या तृतीया प्रति प्राप्यते। कार्गजनिर्मिताया अस्या संस्याभवति Accession No. 164 of VISRAMA यस्या परिमापनं 8.5" x 4" भवति। लिपिश्च देवनागरी एव। सर्वासाम् एतासां लेखनं हस्तलिखितमस्ति।

अस्योपरि डॉ. सत्यप्रकाशशर्ममहोदयेन प्राज्ञपाठशालामण्डलवाई (सतारा) - अनूपसंस्कृत-पुस्तकालयबीकानेरराजस्थानेति स्थानयोः लब्धांशानामाधारेण सम्पादनं कृतम्। अपरञ्च सम्पादनं पूर्वोक्तानां तिसृणां मातृकाणां साहाय्येन उत्कलप्रदेशस्य जगतसिंहपुरमण्डलधिवासिना श्रीमता सुलोकसुन्दरमहान्ति-महाभागेन शौनककारिकानाम्ना सम्पादनं - १९९९ खीष्टसंवत्सरे कृतम्। सोऽयं ग्रन्थः मेधा-इण्डोलजिकाल- पब्लिकेशन्, जगतसिंहपुर, उत्कलतः प्रकाशितः वर्तते। अत्र विषयाः-

परिभाषा - अग्निमुख - आह्निक - मूत्रपुरीषोत्सर्ग - सन्ध्या - सावित्री - त्र्यम्बक - धनार्जन - स्नान - पञ्चमहायज्ञ - देवपूजा - वैश्वदेव - भोजन - कौतुकबन्ध - पुण्याहवाचन - अङ्कुरार्पण - ऋतुशान्ति - गर्भाधान - निष्क्रमण - अन्नप्राशन - चौल - उपनयन - भिक्षाचरण - अनुप्रवचन - मेधाजनन - उपाकर्म - महानाम्निव्रत-उपनिषदव्रत - गोदानव्रत - समावर्तन - कन्याभ्यन्तरलक्षणं - अष्टौविवाह - वरवधूगृहागमन - विवाहहोम - मधुपर्क - कन्यादान - गृहप्रवेशविधि - स्तम्बबल - अपांप्रतिष्ठा - उद्यानप्रतिष्ठा - अश्वत्थोपनयन - ग्रामादिप्रतिष्ठा - नागेन्द्रप्रतिष्ठा - औपासनहोम - अतिपन्नहोम- पुनःसन्धान - नास्तिक्य-विसृष्टस्याग्नेः पूरः सन्धान - अग्निद्वयसंसर्ग - अर्थविवाह - पुत्रकामेष्टि - दत्तपुत्रप्रतिग्रह - अग्निसमारोप - पार्वणस्थालीपाक - अतिपन्नस्थालीपाक - शताभिषेक - ग्रहणाभिषेक - संक्रांति - राज नृपपट्टाभिषेक - अपमृत्युहोम - आयुष्यहोम - बृहस्पति - आदित्य - अद्भुतदुःस्वप्न - विद्युदग्निदाह - वल्मीक - गज - गजरोग - अश्व - यक्ष्मा - रोग - कृत्य - शत्रु - अभिचारशान्ति -जीवकश्राद्ध - गर्भिण्युदक्यामृतशान्ति - मूलजनन - आश्लेषाशान्ति - व्यतीपात - ग्रहणजनन - अधोमुखप्रजनन - गवादिदुःप्रसव - अब्दपूर्ति - यतिसंस्कार - आहिताग्नेर्देशान्तरमरण - ब्रह्मचारीमरण अस्थिशुद्धि - सर्पसंस्कार - अभ्युदयश्राद्ध - काम्यादिश्राद्ध - पिण्डपितृयज्ञ - अहिताग्नेः पार्वणश्राद्ध - नक्षत्रहोम - नारायणबलि - प्रभृतयश्च भवन्ति। अनयोर्द्वयोः पुस्तकयोर्तुलनया शौनकस्य धर्मशास्त्रेण सह सम्बन्धः महान् आसीदिति प्रतीयते। अत उभावपि ग्रन्थौ परिपूरकौ इति वक्तुं शक्यते। कर्मकाण्डसम्बन्धितानामन्येषां शुद्धातिशुद्धपद्धतिसंकलितानां ग्रन्थानां रचनापि शौनकेन कृता इति विज्ञायते।

कर्मकाण्डानुष्ठानातिरिक्तानामन्येषां धर्मशास्त्रविषयाणां विशेषतः स्मार्तविषयाणामुपरि शौनकस्य बह्वी कृतयः स्युरिति अनुमातुं शक्यते। येषाम् उद्धरणानि टीकाग्रन्थेषु धर्मशास्त्रनिबन्धग्रन्थेषु च प्रकीर्णावस्थायामुपलभ्यन्ते।

हेमाद्रि - अपरार्क - मिताक्षरा - दत्तकमीमांसा - दत्तकचन्द्रिका - विष्णुस्मृति-केशववैयन्ती - गदाधर - आचारमयूख - निर्णयसिन्धु - स्मृतिचन्द्रिकाप्रभृतिग्रन्थेषु शौनकवचनानामुद्धरणानामनुशीलनेन

इदन्तावत् विस्मयकरं तथ्यं जागर्ति यत् निरूढकर्मकाण्डीव्यवस्थायाः प्रतिपादकत्वेऽपि शौनकोक्तेषु विचारेषु स्वतन्त्रता - प्रगतिशीलता चासीदिति। उदाहरणार्थं प्राचीनस्मृतिलेखकैः शूद्रस्य दत्तकग्रहणे अधिकारो नास्ति इति उल्लिखितम्। शूद्रस्य यज्ञकर्मणि अनधिकारत्वात् दत्तकपुत्रग्रहणकाले होमस्यावश्यकता निश्चित्वात् च अस्मिन्दत्तकग्रहणे अस्यानधिकारः प्रकल्पितः। वस्तुतः दत्तकहोम एकः संस्कारविशेषः येन दत्तकपुत्रस्य सम्बन्धः नूतनेन वंशेन सह समायोज्यतेः परन्तु कठोरधर्मशास्त्रीभिः विषयेऽस्मिन् यथेष्टं ध्यानं नैव दत्तम्। शूद्रस्यापि पुत्रप्राप्तये तावती एव प्रबला इच्छा भवति यावती च उच्चवर्णलोकस्य। शौनकेन मानवीयभावनायाः अस्याः संवेदनायाश्च अनुभवः कृतः।

शूद्रस्य कृते दत्तकपुत्रग्रहणव्यवस्थापि तेनैव कृता। दत्तकहोमश्च ब्राह्मणै कारयितुं शक्यत इति तद्व्यवस्थातः विज्ञायते[१]। अन्यजातीयं दत्तकपुत्रं दायभागे अंशभाग् न कुर्यादिति शौनकः कथयति[२]। तन्मते दत्तकपुत्रः पुत्रच्छायावहः भवति। अर्थात् औरपुत्रस्य समानोऽयं भवेत्।[३]

पुत्रग्रहणप्रतिग्रहणं तु केवलं तस्यामवस्थायां कर्त्तव्यं यदा स्वयमपुत्रिकः पुत्रजन्मनः काचित्सम्भावना वा न स्यात्। अथवा मृतप्रजः भवेत्।[४]

कलियुगे औरसदत्तकपुत्रयोः वैधानिकमान्यता वर्तते। शौनकस्य मतमिदं अपरार्केण[५] दत्तकमीमांसायां च उद्धृतमस्ति।

क्षेत्रियः शूद्रायां पुत्रं नैव जनयेत् इति तैनेव प्रतिपादितम्[६]। कलियुगे ब्राह्मणस्यापि ब्राह्मणेतरवर्णैसकिं विवाह निन्दनीय इति शौनकमतं उद्धृत्य काणेमहाभागेन प्रपञ्चितम्।[७]

अनैनेव प्रकारेण शौनकेन उच्चवर्णैर्पुरुषैः नीचवर्णस्त्रीया प्रताडनायाः विरोधोऽपि कृतः यस्तु बालखिल्यानां सन्दर्भेषु न शौनकः तादृश उदार इति प्रतीयते। बालखिल्यानां प्रैषाध्यापयितुं, कुन्तपाध्यापयितुं,

---

१. धर्म. शा. क इति. भाग-२, पृ. ८९३

२. यदि स्यादन्यजातीयो गृहीतोऽपि सुतःक्वचित्।
अंशभाजं न तं कुर्यात् शौनकस्य मतं हि तत्॥ (दत्त. चन्द्रिका, पृ. ७)

३. दत्तक. मी., पृ. १४४-१४७ एव दत्त. च., पृ. २११

४. शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च॥ (द. च., पृ. १०)

५. शौनकेनोक्तम् .................... शौनकेनोक्तम्................
दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः। —अपरार्क, पृ. ७३९

६. "शौनकस्य मतमेतत् क्षत्रियविषयम् शूद्रया सुतोत्पत्या पतति" (मनु. मन्वर्थ. ३/१६)

७. धर्म. शा. इति. भाग-२, पृ. ८९६

निविदाध्यापयितुं सुपर्णाध्यापयितुं नैश्चित्यत्वात् शौनकमतानुसारं तेषां वेदपारायणे अधिकारो नास्ति[१]। सोऽयं शौनकः स्मृतिकारशौनकात् भिन्नेति मन्यते।

धर्मशास्त्रकारशौनकः वैष्णवधर्मानुयायी इति प्रतीयते। तेषां विचाराः उदाराः सर्वजनग्रहाश्च। पाञ्चरात्रवैष्णवैः समाजम् एकसूत्रेण ग्रथितुं चेष्टा कृता। फलतः पाञ्चरात्रधर्मस्य स्वरूप एव सर्वग्राह्यः सर्वसमावेशकः जातः। पाञ्चरात्रसम्प्रदाये[२] शौनकस्य महत्वपूर्णं स्थानमस्ति। शौनककारिकायां यद्यपि पुजायां विशेषं स्थानमस्ति तथापि वैष्णवपूजायाः विधिनां विस्तृता चर्चा उपलभ्यते।[३] पूजा प्रकाशनामके ग्रन्थे शौनकोक्ता विष्णुपूजा उद्धृता वर्तते विष्णुसहस्त्रनाम्नः आख्यायां ब्रह्मानंदसरस्वतीमहोदयेन शौनकमतं सादरम् उद्धृतम्। अग्निपुराणे[४] शौनकः हरिभक्तत्वेन वर्णितः। विष्णुधर्मोत्तरे पुराणे शौनकः वैष्णवभक्तेः प्रकृतजिज्ञासुरूपेण वर्णितो वर्तते। विष्णुस्मृतावपि शौनकमतं विष्णुपूजासन्दर्भेषु उद्धृमस्ति। आदिपुराणे शौनकस्य गुरुकुलं नैमिषारण्य विष्णुवनत्वेनापि उक्तो वर्त्तते। अतः निर्विवादम् इदं वक्तुं शक्यते यत् शौनकोऽयं वैष्णव आसीदिति।

---

१. वेदपारायणे वर्जमिति शौनकाचार्यवचनात्। यथा
प्रैषाध्याय- कुन्तापाध्याय- निविदाध्याय- सुपर्णाध्यायश्चेति
तद्बालखिल्याध्याय इत्यर्थः (चरणव्यूहपरिशिष्टभाष्य, पृ. १४-१५)

२. पाञ्चरात्ररक्षा, पृ. १३५, १४०, १४३, १६३

३. पूजा प्रकाश, पृ. १९-११२ (वाराणसी)

४. "सुतोगतः पूजिस्तैः शौनकाद्याः हरिं ययौ" (अग्नि. ३८३/७२)

# अनुपलब्ध्यप्रामाण्यवादः

ड्ड.का.इ.धरणीधरः

सन्निकर्षवादे तत्त्वचिन्तामणौ सन्निकर्षविचारं समाप्य विशेषणताख्यसंनिकर्षेण प्रत्यक्षविषयोऽभाव इति गङ्गेशोपाध्यायेन यदुभं तत् अत्र परमतप्रदर्शनपूर्वकं प्राच्यनव्य न्यायमतरीत्या विचार्यते ।

## अभावो न पृथक् मानमिति गौतमः

न्यायदर्शने ऐतिह्यम् । अर्थापत्तिः । सम्भवः । अभावश्चेति अधिकानां चर्तुणां प्रमाणसद्भावेन प्रमाणचतुष्टयाभ्युपगतिः न सङ्गच्छत इति सूत्रकारः[१] "न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्" इत्यनेन आशङ्क्य ऐतिह्यस्य शब्दे अर्थापत्ति- सम्भवाभावानां त्रयाणां च अनुमाने अन्तर्भावात् चत्वार्येव प्रमाणानीति "शब्द ऐतिह्यानर्थान्तरभावादनुमाने अर्थापत्ति सम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः"[२] इति सूत्रेण सिद्धान्तं प्राह । तत्र अभावपदस्य कोऽर्थः तस्य कथमनुमाने अन्तर्भाव इति विषये न्यायसूत्रतः किमपि नावगम्यते ।

## न्यायसूत्रोभाभावपदार्थ विवरणम्

उभसूत्रव्याख्यानावसरे भाष्यकारेण "अभावः-विरोधी अभूतं भूतस्य-अविद्यमानं वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम् -विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म भवतीति"[३] अस्मिन् सति इदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते[४] इति च अभाषि। तद्ग्रन्थसन्दर्भस्यायमाशयः-अभावपदेन विरुद्धाभावो ग्राह्यः। तथा च तद्विरुद्धा-भावज्ञानेन तद्विरुद्धपदार्थज्ञानजनकमभावप्रमाणमिति तदर्थः । यथा विद्यमानस्य घटाभावस्य अविद्यमानो घटो विरोधी यथा च अविद्यमानं जलं विद्यमानस्याग्नेर्विरोधि । अग्निजलयोः वैयधिकरण्यनियमात् तत्र अन्यतरसत्ताज्ञानेन अन्यतराभावज्ञानं जायत एवेति स्पष्टं यथावा अविद्यमाना वर्षणक्रिया विद्यमानस्य

---

१. न्यायसूत्रम् - २.२-१.
२. न्यायसूत्रम् - २-२-२
३. न्यायभाष्यम् - २.२.२
४. न्यायभाष्यम् - २.२.२

वृष्टिनिरोधकस्य वाय्वभ्रसंयोगस्य बोधिका भवतीति। तथा च अभूतस्य वृष्टिकर्मणो ज्ञानेन तद्विरुद्धस्य वृष्टिनिरोधकस्य वाय्वभ्रसंयोगविशेषस्य यत् ज्ञानं जायते तत् अभावाख्य- प्रमाणेनेति फलति। अतः अभावेनाप्यर्थान्तरप्रमित्युदयेन अभावोऽपि प्रमाणमिति पूर्वोभपूर्वपक्षभाष्यस्यार्थः। सिद्धान्तस्तु- सत्यमभवः प्रमाणम्। नत्वरिभं प्रमाणम्। अभावस्य लिङ्गविधया अर्थान्तरप्रमितिजनकत्वेन अनुमाने अन्तर्भावात्। उभस्थलेऽपि वृष्ट्यभावस्य वायुमेघेनाविनाभावोऽस्ति। तन्महिम्ना च मेघः जलपतनप्रतिबन्धक- वायुसंयोगवान् पातख्यवृष्ट्यभावात् इत्यनुमानं प्रवर्तते। किं च यथा कारणाभावे कार्यं नोपपद्यते तथा वाय्वभ्रसंयोगोविशेषे सति वृष्टिर्नोपपद्यत इत्येवं विद्यमानानुपपद्यमानयो विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य कार्योत्पादप्रतिबन्धकमभावप्रमाणेन ज्ञायत इत्येवं वभव्यम्। तत्र कार्यानुत्पत्तेः कारणप्रतिबन्धकं व्यापकमेव। तथा च व्याप्यभूतकार्यानुत्पत्तेर्ज्ञानेन व्यापकीभूतप्रतिबन्धकस्य ज्ञानमनुमानमेवेति नाभावोऽपि प्रमाणान्तरम्। तदुभं वार्तिके "अभावो नाम प्रत्यनीकस्यग्रहणात् तद्विरोधिनो ग्रहणं यथा - विधारके वाय्वभ्रसंयोगे सति गुरुत्वप्रतिबन्धात् अपां पातः प्रतिषिद्धः तदपामपातेन विरोधिनं वाय्वभ्रसंयोगं प्रतिपद्यते"[१] इति। अत्र च यः पतनाख्यकार्याभाववान् स पतनप्रतिबन्धकद्रव्यसंयोगवान् यथा फलमिति सामान्यमुखी व्याप्तिरनुसन्धेया। अत एव अभावस्य सामान्यतो दृष्टानुमाने अन्तर्भावः।

एवमेव वाचस्पतिमिश्रेणापि तात्पर्यटीकायां प्रत्यपादि। तथा हि - "तदिदं ...... वाय्वभ्रसंयोगः" इति पूर्वपक्षं प्रापय्य "वर्षाभावप्रत्ययस्तु वाय्वभ्रसंयोगे अनुमानमुभम्" इति सिद्धान्तः प्रादर्शि।

## सूत्रगतम् अभावपदम् किम् अनुपलब्धिवाचकम् उत न इति गवेषणदृष्ट्या विचारः

परं त्वेतेषु मूलग्रन्थेषु मीमांसकैः अभावशब्देन निरूप्यमाणं यत् अनुपलब्ध्याख्यं प्रमाणं तस्य प्रस्ताव एव न दृश्यते। यद्यपि अनुपलब्धेरपि उपलब्ध्यभावरूपतया तस्यापि घटाभावादिप्रत्यायकस्य प्रमाणत्वशङ्का। तस्य अनुमाने अन्तर्भावश्च तुल्यन्यायेन पूर्वोत्तरपक्षसूत्राभ्यां सूच्यत इति अस्ति संभावयितुमवकाशः। तथापि भाष्यवार्तिकयोः तात्पर्यस्यास्य सूचकं किमपि नोपलभामहे।

अत एवं प्रतीमो यत् सूत्रकार काले अभावानुपलब्ध्योः पर्यायता नासीदिति। तथा हि - "लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः"[२] इति सूत्रेण लक्षणानि कानिचित् केषांचिद् वाससामुक्त्वा "एतादृशलक्षणशून्यानि वासांसि आनय" इत्युभे येषु वस्त्रेषु तानि लक्षणानि न सन्ति तानि लक्षणाभावेन जानातीति वस्त्रविशेषप्रतीतिहेतुर्लक्षणाभावः प्रमाणमिति प्रतिपाद्यते। इदं सूत्रं "नाभावप्रामाण्यं प्रमेयासिद्धेः"[३] इति पूर्वसूत्रोत्थापिताक्षेपसमाधानरूपम्। अत्रापि लक्षणाभावः अभावाख्यप्रमाणपदेन व्यवहृतः। लक्षणाभावश्च नानुपलब्धिः।

१. न्यायवार्तिकम् - २-२-२
२. न्यायसूत्रम् - २-२-८.
३. न्यायसूत्रम् - २-२-७.

इदं त्ववधेयम् -"तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः"[१] इत्येतत् पञ्चमाध्यायगतन्यायसूत्रम् अनुपलब्धिसमां लक्षयति। अस्यायमर्थः - यथा घटाभावाभावो घटस्वरूपो भवति तथा शब्दस्य आवरणाभावाभाव आवरणस्वरूप एव। आवरणानुपलब्धेरनुपलम्भाच्च आवरणाभावाभावः सिद्धः। तेन शब्दावरणादेः सत्त्वं सिद्धम्। तेन प्रागुच्चारणादनुपलभ्यमानस्यापि शब्दस्य सत्त्वं सिद्धं। तेन नित्यत्वं सिद्धम्।तथा च अनुपलब्धिमाश्रित्य प्रत्यवस्थानात् अनुपलब्धिसमा जातिरिति सूत्रार्थः। तथा च अनेन सूत्रेण शब्दस्य नित्यत्वं प्राप्तमिति फलति। अस्य च समाधानमेवमकारि - "अनुपलम्भात्मकत्वात् अनुपलब्धेरहेतुः"[२] इति। उभयत्रापि अनुपलब्धेरभावप्रमां प्रति कारणत्वं सूत्रभाष्याभ्यां सूचितत्वात् अनुपलब्धेरभावप्रमितिं प्रति हेतुत्वं सूत्रभाष्यकारयोस्सम्मतमेवेत्यवधार्यते। अत्र "आवरणाद्यनुपलब्धिरावरणादीनामभावं गमयति न त्वात्मनोऽभावमावरणाद्युपलब्धिरूपम्। न ह्यसौ अनुपलब्धिरपि आत्मनः। येन अत्माभावं गमयेत्। उपलब्धिरप्युपलम्भविषया किं पुनरनुपलब्धिः"[३] इति तात्पर्यटीकापि अनुसन्धेया। तथापि अभावाख्यप्रमाणनिरूपणावसरे अभावपदेन अनुपलब्धिर्न गृहीता ताभ्यामित्येतावदेव अत्यन्तविस्मयावहमस्ति।

## न्यायमञ्जर्याम् अनुपलब्धिः

अथेदानीं न्यायमञ्जरीकृन्मतम् अनुपलब्धिविषये कीदृशमिति विवृणुमः। अनुपलब्धिर्नाम उपलम्भाभावः। यत्र भूतलादौ घटादेः ज्ञापकं प्रमाणं न प्रवर्तते तत्र तादृशघटाभावप्रमितौ उपलम्भाभावः मानम्। प्रतियोग्यनुपलम्भ एव अभावोपलम्भे कारणम्। तथा चोभं जयन्तार्यैः

> **"सत्परिच्छेदकं यत्र न प्रमाणं प्रवर्तते।**
> **तदभावमितौ मानं प्रमाणाभाव उच्यते॥**[४] **इति।**

## अभावग्रहणानुपपत्तिरूपा आशङ्का तत्समाधानं च

ननु अभावबुद्धिः इन्द्रियविषया न भवति। सन्निकर्षाभावात्। तदुभं श्लोकवार्तिके

> **"न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः।**
> **भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य च॥"**[५]

इति। कथं तर्हि अभावस्य ग्रहणमिति चेत्- उच्यते। विदूरदेशव्यवस्थितः स्थूलज्वालावलीजटिलश्च यो वह्निः तद्गतभास्वररूपोपलम्भानुवर्ति यत् तद्गतोष्णस्पर्शज्ञानं तद्वत् इह

---

१. न्यायसूत्रम् - ५-१-२९
२. न्यायसूत्रम् - ५-१-३०
३. तात्पर्यटीका - ५-१-३०
४. न्यायमञ्जरी - पृ. १३०
५. श्लोकवार्तिकम् - पृ- ४१४

भूतले घटो नास्तीत्यत्र घटाभावप्रमितिः जायते। यथा तादृशज्वलनदर्शनकाले एव तद्गतोष्णस्पर्शज्ञानं जायत एव। अथापि न तच्चाक्षुषम्। तथा भूतलदर्शने सति घटाभाव- ज्ञानमिति ज्ञेयम्। तथा चोभं श्लोकवार्तिके कुमारिलपादैः

**"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।**
**मानसं नास्तिता ज्ञानं जायतेऽक्षानपेक्षया॥"**[१]

इति। तथा चाभावज्ञानं नैन्द्रियकम्। अपि तु मानसम्। अतः अभावाख्याप्रमितिपरिच्छेदकं प्रमाणमनुपलब्धिरूपेण पृथक् वभव्यमिति चेत् न। "इह घटो नास्ति" इत्यत्र अभावा-धिकरणयोः एकप्रमाणगम्यत्वं सूपपादम्। तथा हि - इह घटो नास्तीति ज्ञानं हि विशेष्यविशेषणोभयविषयकं चाक्षुषमेव। न हि एकमेव ज्ञानं विशेष्यांशे चाक्षुषं विशेषणांशे मानसमिति संभवति। प्रमाणभेदे प्रमिति-भेदावश्यंभावात्। न चेदं विभिन्नमेव ज्ञानद्वयम्, अननुभवात्। अतः ज्ञानैक्ये अनुभवसिद्धे प्रमाणपरिशीलनायां विशेष्यग्रहणार्थमावश्यकेन चक्षुषैव विशेषणग्रहणार्थमावश्यकेन चक्षुषैव विशेषणग्रहणमकामेनापि वाच्यम्। न च पर्वतो वह्निमान् इत्येकस्मिन्नेव ज्ञाने अंशभेदेन पर्वतोऽपरोक्षः, वह्निः परोक्ष इति यथा स्वीकृतम् तथैव भूतलांशे ऐन्द्रियकम्, अभावांशे अनैन्द्रियकमिति प्रकृतेऽपि स्वीक्रियतामिति वाच्यम्, दृष्टान्तवैषम्यात्। "पर्वतो वह्निमान्" इति विशिष्टमेकं ज्ञानं परोक्षमेव। पर्वतो धूमवान् इति पक्षधर्मताज्ञानं परमपरोक्षमिति नानुपपत्तिः। ज्वालावलीजटिलानलदृष्टान्तोऽपि चक्षुर्व्यापारस्य तत्र अन्यथासिद्धत्वेन परिहर्तव्यः।

असंनिकृष्टोऽप्यभावः कथं गृह्यत इति चेत्-उच्यते। स च चक्षुषा गृह्यत इति प्रागवादिष्म। न च नीरूपस्य ग्रहणं कथमिति वाच्यम्, चाक्षुषं नाम चक्षुरिन्द्रियज्ञानविषयत्वम्। "शेषे"[२] इति सूत्रात् चक्षुषा गृह्यत इत्यस्मिन्नर्थे शैषिके अण् प्रत्यये खलु "चाक्षुषम्" इति पदनिष्पत्तिः। तथा च चक्षुरिन्द्रियजन्यज्ञानविषयत्वमेव चाक्षुषपदप्रवृत्तिनिमित्तम्। न तु रुपवत्त्वम्। रूपवतामपि परमाणूनामचाक्षुषत्वात्। नीरूपस्यापि रूपस्य चाक्षुषत्वादित्यन्वयतो व्यतिरेकश्च व्यभिचारप्रसिद्धेः।

## असंनिकृष्टस्य अभावस्य ग्रहणोपपादनम्

ननु प्रत्यक्षादिभिः भावग्राहकैः प्रमाणैरेव अभावोऽपि ग्रहीतुं शक्यत इति न प्रमाणान्तरगवेषणस्य आवश्यकता। असंनिकृष्टस्याभावस्य कथं चक्षुषा ग्रहणमित्यत्रा द्वेधा समाहितं न्यायमञ्जर्याम्-

असंबद्धस्य चक्षुषा अग्रहणमिति नियमः भाव एव। अभावस्त्वसंबद्धोऽपि चक्षुषा ग्रहीष्यते। न च यदि अभावः इन्द्रियसंनिकर्षं विनापि गृह्येत तर्हि विशेषणताख्यसंनिकर्षः किमर्थमिति वाच्यम्।

---

१. श्लोकवार्तिकम् - पृ- ४१६
२. अष्टाध्यायी - ४-२-९२

समवायप्रत्यक्षे तस्य उपयोक्ष्यमाणत्वात्। एवं च षड्विधसंनिकर्षोऽपि भावविषयक एव। तस्मात् संनिकर्षमलभमानमपि नयनमभावविषयकं प्रत्यक्षमुपजनयति। न च असंवद्धत्वाविशेषात् देशान्तरवर्तिसर्वाभावप्रत्यक्षापत्तिरिति वाच्यम्। आश्रयग्रहणस्य अभावप्रत्यक्षं प्रति हेतुत्वात्। आश्रयस्यैव तु संनिहितस्यैव प्रत्यक्षत्वात्।

यद्वा संयुभविशेषणताख्यसंनिकर्षेण चक्षुरभावं गृह्यते, यथा समवायप्रत्यक्षत्ववादिनां पक्षे विशेषणताख्यसन्निकर्षेणसमवायास्य। अत एवोभं "समवाये अभावे च विशेषणविशेष्यभावात्" इति न्यायवार्तिके। समर्थितं चैतत् तात्पर्यटीकायां "तत्सिद्धं विशेषणभावादभावस्येन्द्रियप्रमेय- तेति" इत्यन्तेन ग्रन्थेन। न च चक्षुस्संयुक्तविशेषणतायाः रूप इव रसादिष्वपि विद्यमानत्वात् रसादीनामपि चक्षुषा ग्रहणापत्तिरिति वाच्यम्। योग्यतासहकृतस्यैव संनिकर्षस्य प्रत्यक्षहेतुत्वात्। रसे च चाक्षुषप्रत्यक्षयोग्यताविरहात्। न चावश्यापेक्षिता योग्यतैव हेतुरस्तु। किं संनिकर्षेणेति वाच्यम्, इन्द्रियाणां प्राप्यकारित्वेन संनिकर्षस्याप्यावश्यकत्वात्। यत्र योग्यता तत्र संनिकर्षोऽपि वर्तते। न तु यत्र संनिकर्षस्तत्र योग्यता इत्यभ्युपगमात् न रसादीनां चाक्षुषत्वमुपपादयितुं शक्यते।

न च विशेषणविशेष्यभावस्य संयोगादिसंबन्धान्तरमूलकत्वात् संयोगादिरहितस्य अभावस्य कथं विशेषणत्वमितिवाच्यम्। भाव एव विशेषणविशेष्यभावः संबन्धान्तरमूलको न त्वभाव इति यथा प्रतीत्यभ्युपगमात्। प्रत्युत भावेऽप्ययंनियमः यत्संबद्धं तद्विशेषणमेवेति वा यद्विशेषणं तत्संबद्धमेवेति वा। पादेन पीडिते शिरसि धार्यमाणे दण्डे दण्डीति प्रत्ययानुदयात् विशेषणेऽपि समवाये संयोगादिना संबद्धत्वाभावाच्च। तस्मात् संबन्धान्तररहितोऽपि विशेषणविशेष्यभावः स्वतन्त्र एव संबन्धः वाच्यवाचकभावादिवत् प्रतीतिमनुसृत्य अवधार्यते। अतो न दोष इति।

तथा च न वयं प्रमाणं विना प्रमेयमात्रमङ्गिकुर्मः। परंतु प्रमाणेन क्लृप्तातिरिभेनैव भाव्यमिति कुतो भर्त्सयति मीमांसकः समीपस्थस्य अभावस्य इन्द्रियेण ग्रहणं। परोक्षस्य तु यथासंभवनुमानादिनापीति नातिरिभप्रमाणापेक्षेति सिद्धम्।

एवमादिभिर्युभिभिः न्यायमञ्जरीकृतः अनुपलब्धेः प्रमाणान्तरत्वं निराकार्षुः।

## न्यायकन्दल्याम् अनुपलब्धिः

अत्रैवमाहुः कन्दलीकृतः इन्द्रियसंनिकर्षाद् भूतले उपलभ्यमाने घटाभावोऽप्युपलभ्यते अघटं भूतलमिति। तत्र भूतलस्येव अभावस्यापि प्रत्यक्षता किं नेष्यते न च भावांशेनैव इन्द्रियसंबन्धः, योग्यत्वादिति वाच्यम्। इन्द्रियान्वयव्यतिरेकानुविधायिज्ञानाख्य कार्यगम्यायाः योग्यतायाः भाववत् अभावेऽपि तुल्यत्वात्।

प्रातः कालिकाभावविषयेऽपि एवं वभव्यम् - प्रातः अधिकरणस्वरूपमात्रं दृष्टवतः स्थानान्तरं गतस्य अन्येन "किं प्रातः तत्र गजमपश्यः" इति प्रश्नानन्तरं प्रतियोगिनि स्मर्यमाणे या अभावप्रतीतिः सा अनुमानात्। यो हि यस्मिन् स्मर्यमाणे स्मृतियोग्यः सत्यामपि सुस्मूर्षायां न स्मर्यते स तस्य ग्रहणकाले नासीदिति।

## न्यायसिद्धान्तमुभावल्याम् अनुपलब्धिः[१]

अत्र विश्वनाथः - अभावग्रहणे इन्द्रियसंबद्धविशेषणतासंनिकर्षो हेतुः। तथा हि - भूतले घटाभावप्रत्यक्षस्थले चक्षुरादीन्द्रियसंयुभभूतले विशेषणं घटाभावः स्वरूपसंबन्धेन वर्तते। स्वरूपसंबन्धावच्छिन्नवृत्तिता एव विशेषणता, विषयता इत्युच्यते। सा च घटाभावे अस्ति। अतः अभावप्रत्यक्षे इन्द्रियसंबद्धविशेषणतासन्निकर्षो हेतुः। अत एव विशेष्यविशेषणभावाख्यः षष्ठः सन्निकर्षो निरूपितो नैयायिकैः। स च द्विधा विभज्यते - इन्द्रियसंबद्धविशेष्यत्वम्, इन्द्रियसंबद्धविशेषणत्वं चेति। यत्र "भूतले घटो नास्ति" इति प्रतीतिर्जायते। भूतलवृत्तितावान् घटाभाव इति तदर्थत्वात् तत्र घटाभावो विशेष्यपदार्थः। भूतलं तु वृत्तितासंबन्धेन घटाभावे विशेषणं भवति। तथा चात्र घटाभाव प्रत्यक्षे चक्षुस्संयुभभूतलनिरूपितविशेष्यताख्यः सन्निकर्षो हेतुर्वाच्यः। यत्र तु घटाभाववद् भूतलमिति प्रत्ययः तत्र घटाभावो भूतले विशेषणं भवतीति तत्र चक्षुस्संयुभभूतलनिरूपितविशेषणता- संनिकर्षो हेतुर्बोध्यः।

अतस्सिद्धं समवायप्रत्यक्षे यथा इन्द्रियसंबद्धविशेषणतासंनिकर्षो हेतुः तथा अभावप्रत्यक्षेऽपीति भाव्यम्।

## विशेषणतायाः नानात्वात् कथं संनिकर्षषट्कवादोपपत्तिरिति शङ्का-तत्समाधानं च

अत्रेयमाशङ्का - अत्र विशेषणतासंनिकर्षस्य प्रत्यक्षेण सह कार्यकारणभावस्थले विशेषणतासंबन्धष इन्द्रिय तत्संनिकर्षभेदेन इन्द्रियसंबद्धेति विशेषणभेदात् बहुविधो भवति। तेन विशेषणतासंनिकर्ष एकः षष्ठ संख्यापूरक इति कथनं न संगतं भवति। तथा हि - भूतले घटाभावप्रत्यक्षं प्रति चक्षुस्संयुभ विशेषणतासंनिकर्षो हेतुः। घटस्थायामेकत्वसंख्यायां विद्यमानरूपाभावप्रत्यक्षं प्रति चक्षुस्संयुभसमवेत विशेषणतासंनिकर्षो हेतुः। घटस्यैकत्वभसंख्यावृत्तिसंख्यात्वे जातौ रूपाभावो वर्तते। तत्प्रत्यक्षं प्रति चक्षुस्संयुभसमवेतसमवेतविशेषणतासंनिकर्षो हेतुः। एवमन्यत्राप्यूह्यम्। तथा च विशेषणतायाः बहुत्वात् कथमयं षष्ठसंख्यापूरको भवेदिति चेत् -

सत्यम्। बहुविधापि विशेषणता विशेषणतात्वेन धर्मेण एकैव सा स्वीक्रियत इति नातः षोढा संनिकर्षव्याघातः। अन्यथा षड्विधसंनिकर्षगणना विरुध्येत। तथाचैवं स्पष्टचकारि उद्योतकारेण वार्तिके "संनिकर्षः पुनः षोढा भिद्यते, संयोगः, संयुभसमवायः, संयुभसमवेतसमवायः, समवायः,

---

१. न्यायकन्दली - पृ.५४४ । न्यायसिद्धान्तमुभावली पृ - २६०

समवेतसमवायः, विशेषणविशेष्यभावश्चेति"[1] इति। एवं न्यायमञ्जरीकृतापि प्रादर्शि - "अत एव सर्वेन्द्रियाणां प्राप्यकारित्वं पश्यद्भिः शास्त्रज्ञैः इन्द्रियार्थसंनिकर्षः षट्प्रकारो व्याख्यातः"[2] इति। अतः प्राचां प्रवादे विहितश्रद्धैरवश्यमभ्युपेयः षष्ठः संनिकर्षः। विस्तरतु प्रभामञ्जूषादौ द्रष्टव्य इत्यलमिति विस्तरेण।

किं च अभावप्रत्यक्षे योग्यानुपलब्धिः कारणम्। तथाच अनुपलब्धिसहकृतेन इन्द्रियेणैव अभावप्रत्यक्षसंभवे अनुपलभ्यात्मकप्रमित्यन्तरं तत्करणत्वेन अनुपलब्ध्यात्मकं प्रमाणं च न स्वीकार्यं गौरवात्। अतस्सिद्धं न पृथक् प्रमाणमनुपलब्धिर्नाम।

## न्यायकुसुमाञ्जलौ अनुपलब्धिः

अत्राहुरुदयनाचार्याः - अनुपलब्धिर्नाम उपलम्भाभावः। न च दृश्ये स्मर्यमाणे भूतलोपलम्भ एव वा घटोपलम्भे स्मर्यमाणे केवलात्मोपलम्भ एव वा अनुपलब्धिपदार्थोऽस्त्विति वाच्यम्। स्मर्यमाणे दृश्यमाने घटे भूतलोपलम्भे सति घटवत्यपि प्रसङ्गस्य दुर्निवारत्वात्। तस्मादुपलम्भाभाव एव अनुपलब्धिपदार्थः। अत एवोभं परिशुद्धौ - "उपलम्भाभाव एव अनुपलम्भः"[3] इति।

न्यायकुसुमाञ्जलौ तृतीयस्तबके मतिमतामपि दुरूहैर्विषयैः अनुपलब्धिमधिकृत्य बहुधा चर्चितः। तथापि तत्रत्यविषयाणां सार एवात्र प्रदर्शयामः।

अनुपलब्धेः प्रत्यक्षानुमानयोरन्तर्भावमभिप्रयन्त्येते। तथा हि - अनुपलब्धिः कदाचित् अज्ञायमाना कदाचिच्च ज्ञायमाना अभावज्ञानं प्रति कारणम्। तत्र ज्ञातानुपलब्धेः अनुमाने अज्ञातानुपलब्धेः प्रत्यक्षे च अन्तर्भावः। ज्ञातकारणस्य परोक्षज्ञानजनकतायाः अज्ञात कारणस्य परोक्षविजातीय-प्रत्यक्षज्ञानजनकतायाश्च लिङ्गेन्द्रियादौ दृष्टत्वात्।

## ज्ञातानुपलब्धेः अनुमानान्तर्भावोपपादनम्

अथ ज्ञातानुपलब्धेः कथमनुमाने अन्तर्भाव इति चेत् - श्रृणु। मन्दिरात् चैत्रमानेतुमाज्ञप्तः प्रेष्यः स्वामिने कथयति "निपुणतरमन्विष्टो मया मन्दिरे चैत्रः, एवमपि नोपलब्धः" इति। अस्माच्च मन्दिरे चैत्रस्य योग्यानुपलब्धिं ज्ञात्वा स्वामी अनुमिनोति "प्रेष्यप्रवेशसमय चैत्रा मन्दिरे नासीत्" इति। अत्र परकीयानुपलब्धिः शब्दतो ज्ञायमाना अनुमित्यात्मकं परोक्षज्ञानं जनयतीति। तदुभं - "निपुणतरमनुसृतो मया मन्दिरे चैत्रः, न चोपलब्धः इति श्रुत्वा श्रोता अनुमिनोति, नूनं नासीदेवेति" इति।

---

१. न्यायवार्तिकम् - १९९
२. न्यायमञ्जरी - पृ. १९१
३. तात्पर्यटीका परिशुद्धिः - २४८

## प्रातःकालिकाभावप्रतीतिनिरूपणं

एवमेव प्रातःकालिकाभावप्रतीतिरपि व्याख्याता। तथा हि - चैत्रो मन्दिरे प्रातरासीत् किम् इति मध्याह्ने केनचित् पृष्टे कश्चिदेवं मन्यते - निपुणतरं प्रातः चैत्रान्वेषणाय निरिक्षितमन्दिरप्रवेशेनापि मया यस्माच्चैत्रो नोपलब्धः तस्मात्तदा स तत्र नासीदिति। अत्र स्वयमेव स्वकीयानुपलब्धिं कालान्तरे ज्ञात्वा अभावमनुमिनोति। तस्मात् प्रातः कालिकाभाव- प्रतीतिर्मध्याह्ने जायमान ज्ञातानुपलब्धिजन्यत्वादनुमितिरूपेति।

## अज्ञातानुपलब्धेः प्रत्यक्षान्तर्भावनिरूपणम्

अज्ञातानुपलब्धिजन्यं तु ज्ञानं प्रत्यक्षं तत्र चत्वार हेतव उपन्यस्यन्ते।

**"प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्।**

**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः॥[१]" इति।**

इन्द्रियभूतलसंयोगानन्तरजन्या "अघटं भूतलं" इत्यभावबुद्धिः इन्द्रियकरणिका अपरोक्षरूपत्वात्। कार्यान्तरानुपक्षीणेन्द्रियसंनिकर्षानन्तरभावित्वात्, अज्ञायमानकरणकत्वात्, मनसो भावरूपं कारणान्तरम् अपेक्ष्यैव बाह्यानुभवजनकत्वनियमसिद्धत्वात् मनस्सहकारिभाव भूतकरणसापेक्षत्वाच्चेति उभश्लोकस्यार्थः। एते च हेतवः कुसुमाञ्जलौ तत्त्वचिन्तामणौ च सविस्तरं निरूपिता इति नेह प्रतन्यते।

एवमन्येऽपि चत्वारो हेतवः इन्द्रियाणामभावप्रमितिकारणत्वे कुसुमाञ्जलौ प्रोभाः -

**"प्रतियोगिनि सामर्थ्यात् व्यापराव्यवधानतः।**
**अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात्"[२] ॥**

इति। इन्द्रियस्य प्रतियोगिग्रहणे सामर्थ्यात् अभावग्राहकत्वमप्यस्तीति वभव्यम्। यद्धि प्रमाणं यद्भावमवगाहयति। तत् तदभावमपि ज्ञापयति। यथा लिङ्गं शब्दे वा। घटाद्यवगाहि च इन्द्रियम्। तथा चेन्द्रियम् अभावग्राहकं प्रतियोगिग्राहकत्वात् शब्दादिवत् इत्यनुमानं प्रतियोगिनि सामर्थ्यादित्यत्र विवक्षितम्। न चेन्द्रियेण अधिकरणग्रहणानन्तरमभावग्रहणात् अधिकरणग्रहणव्यवहितस्य अभावग्रहस्य कथमिन्द्रियजन्यत्वं संभवतीति वाच्यम्। अधिकरणग्रहणस्थव्यापारत्वात्। न हि व्यापारो व्यवधायक इत्याशयेनाह "व्यापाराव्यवधानतः" इति। किंचाभावभ्रमं प्रति इन्द्रियदोषस्य कारणत्वेन दुष्टस्य यस्य भ्रमकरणत्वं तस्य निर्दोषस्य प्रमाकरणत्वात् अभावप्रमा निर्दोषेन्द्रियकरणिकेत्यभ्युपभगन्तव्यम्। तथा

---

१. न्यायकुसुमाञ्जलिः - पृ. २३०
२. न्यायकुसुमाञ्जलिः - पृ. २४०

च इन्द्रियम् अभावप्रमाकरणम् तद्भ्रमकरणत्वात्, यत् भ्रमकरणं तत् प्रमाकरणं यथा इन्द्रियलिङ्गशब्दादीति तृतीयो हेतुः। तदुभम् - "अक्षाश्रयत्वाद्दोषाणाम्" इति। भूतलं घटवत् इति बुद्धिरिव अघटं भूतलमिति बुद्धेरपि विशिष्टबुद्धित्वात् इन्द्रियकरणकत्वमङ्गीकरणीयमित्याह -

"इन्द्रियाणि विकल्पनात्"। इति॥

ननु विशिष्टबुद्धौविशेषणज्ञानस्य कारणत्वात् "अघटं भूतलम्" इति विशिष्टबुद्धेः पूर्वं घटाभावरूपविशेषणमात्रविषयकज्ञानमङ्गीकर्तव्यम्। तस्य च विशेषणज्ञानस्य अनुपलब्धिजन्यत्वात् अनुपलब्धेः प्रमाणन्तरत्वमावश्यकम्। न च विशिष्टग्रहणसामर्थ्यात् इन्द्रियं विशेषणग्रहणमपि जनयतीति वाच्यम्। सुरभिचन्दनमितिविशिष्टबुद्धिजनकस्य चक्षुषस्सौरभमात्रग्राहकत्वप्रसङ्गात् अत एव तत्र घ्राणचक्षुषोस्समाहारेणसामर्थ्ये स्वीकृते सौरभादेरपि चाक्षुषत्वप्रसङ्गात्। विशेषणज्ञानस्य प्रागावश्यकत्वाच्च घ्राणेन सोरभज्ञानं जायते। ज्ञानलक्षणाप्रत्यासत्तिसहकृतेन चक्षुषा चन्दनांशमात्रो साक्षात्कारात्मकं सौरभांशे अलौकिकं च ज्ञानं जायते। तथा अत्रापि अनुपलब्धिजन्याभावग्रहसहकारेण विशिष्टबुद्धिग्राहकमिन्द्रियमिति सिद्धमनुपलब्धिः प्रमाणमिति चेत् -

उच्यते। विशिष्टज्ञानमात्रस्य न विशेषणज्ञानजन्यत्वनियमः प्रतियोग्यनुयोगिरूपावच्छेदका-ग्रहानियतविशिष्टज्ञान एव तथा नियमः। अभावस्य प्रतियोग्यनुयोग्युपरागेणैव भानात् अभाव-ज्ञानमुदयमासादयत् प्रतियोग्यनुयोगिविशिष्टाभावविषयकतयैव उदयत इति तत्र विशेषणज्ञानस्य अनपेक्षणात्।

अभावप्रत्यक्षे स्वरूपस्यैव संनिकर्षत्वात् संनिकर्षाभाव चाद्यं नावसरं प्राप्नोतीति "स्वभावप्राप्तौ सत्यामप्याधिका प्राप्तिः"[१] इत्यादि ग्रन्थेन निरूपितम्। एतत्सर्वम्

**"अवच्छेदग्रह ध्रौव्याद् ध्रौव्ये सिद्धसाधनात्।**
**प्राप्त्यन्तरेऽनवस्थानात् न चेदन्योऽपि दुर्घटः॥**[२]

इति कुसुमाञ्जलिकारिकाविवरणे प्रापञ्चितमितीतो विरम्यते।

## तत्त्वचिन्तामणौ अनुपलब्धिः

अत्र मणिकृतः - तत्त्वचिन्तामणौ कुसुमाञ्जलौ प्रतिपादितान् अभावबुद्धेः प्रत्यक्षत्वसाधकान् अष्टावपि हेतुन् निरस्य अनुपलब्ध्याख्यप्रमाणजन्येति पुर्वपक्षं प्रापय्य। सिद्धान्ते भावग्रहे क्लृप्तकारण-भावेन्द्रियादेव अभावज्ञानोत्पत्तौ नानुपलब्धिर्मानान्तरमिति निरूपितम्। न च सन्निकर्षा-

१. न्यायकुसुमाञ्जलिः - पृ. २४५
२. न्यायकुसुमाञ्जलिः - पृ. २४३

भावानेन्द्रियजन्यत्वमिति वाच्यम्। विशेषणताया एव संनिकर्षत्वात्। अत एव प्राङ्नास्तितास्थलेऽपि अनुमानेनैव अन्यथासिद्धिरिति निरूपितम्। अस्मरणेन प्राङ्नास्तित्वमनुमीयते। न च अस्मरणमपि स्मरणाभावः तस्याप्यस्मरणान्तरेणानुमितिरित्यनवस्थेति वाच्यम्। अस्मरणस्य मानसप्रत्यक्ष-स्वरूपत्वात्। तदाहुः "किं तु मनसा ज्ञातात् योग्यास्मरणात् लिङ्गात् प्रमाणत्वेन क्लृप्तत्वात् तत्र अभावप्रतीत्युपपत्तौ नानुपलब्धिः प्रमाणान्तरम्"[१] इति मणौ। इयं च युभिर्नूतनेति ध्येयम्।

किंच अधिकरणज्ञानोपक्षीणमिन्द्रियमिति वदता प्रतियोगिग्राहकेन्द्रियजन्याधिकरण-ज्ञानसहकृता अनुपलब्धिरभावग्रहे करणमिति वभव्यम्। इयं तु न युज्यते। अधिकरणज्ञानस्य अनुपलब्धिसहकारित्वे मानाभावात्।

अपि च घटवति भूतले घटोपलम्भप्राक्काले घटानुपलब्धेः सत्त्वात् कुतो नाभावधीः। घटाभावादिति चेत् - तर्हि अभावरूपार्थजन्या अभावबुद्धिः अर्थजन्यत्वेन साक्षात्कारिणी इन्द्रियजन्या च स्यात् इत्यापि नूत्ना युभिः अभावधियः प्रत्यक्षत्वे मणावुभा।

## भाट्टमीमांसकाभिमता अनुपलब्धिः

अभावाख्यं प्रमाणमतिरिभतया यतः अत्यादरेण स्थापयितुमीहन्ते अतो मीमांसाशास्त्रग्रन्थस्थाः तत्साधकयुभीः सुनिपुणमत्र संकलयामः।

## शाबरभाष्ये अनुपलब्धिः

अत्र शाबरं भाष्यम् - अभावाख्यमतिरिभं प्रमाणमधिकृत्य यद्यपि जैमिनि सूत्रेषु नोपलभ्यते। तथापि शाबरभाष्ये षण्णामपि प्रमाणानां सङ्ग्रहेणलक्षणाभिधानसन्दर्भे अभावप्रमाणमधिकृत्य प्रमाणानां सङ्ग्रहेण लक्षणाभिधानसन्दर्भे अभावप्रमाणमधिकृत्य "अभावोऽपि प्रमाणाभावः नास्तीत्यस्य अर्थस्य असंनिकृष्टस्य"[२] इति भाषितम्। "भूतले घटो नास्ति" इत्येवं प्रतीयमानो यो नञर्थोऽभावः इन्द्रियासंनिकृष्टः तस्यबोधकं प्रमाणमभाव इत्युच्यते। अभावो नाम प्रमाणाभावः। प्रत्यक्षादिप्रमाणपञ्चकाभाव इति यावत्। अत्र प्रमाणाभावपदेन उत्पत्तियोग्यस्य प्रत्यक्षादिप्रमिति पञ्चकस्य अनुत्पादरूपः प्रागभाव उच्यते। तथा च भूतले घटो नास्तीति भूतलाधिकरणतया भूतलव्यतिरेकेण प्रतीयमानस्य घटाभावस्य असंनिकृष्टतया प्रत्यक्षाद्यविषयस्य बोधकः प्रतियोगिघटविषये उत्पत्तियोग्यस्य प्रत्यक्षादि प्रतीति पञ्चकस्य अनुत्पादलक्षणः यः प्रागभावः स एव षष्ठं प्रमाणमिति शाबरभाष्यस्याशयः। अयमेव अनुपलब्धिपदेन पश्चात्कालिकैः व्यवह्रियते।

---

१. तत्त्वचिन्तामणिः - पृ. ७२३
२. शावरभाष्यम् -१-१-५.

## श्लोकवार्तिके अनुपलब्धिः

कुमारिलपादास्त्वेवमाशेरते – एतत्त्वं स्पष्टीचिकीर्षया अभाववादः इत्येकं प्रकरणं श्लोकवार्तिके निरमायि। तथा हि – तत्र पूर्वोदाहृत भाष्य विवरणाय कुमारिलाः

**"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।**
**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥"**[१]

इत्यभ्युधुः। वस्तुतः घटादेः सत्तायाः अवबोधकं यत् प्रत्यक्षादिप्रमाणपञ्चकं तत् यत्र घटादौ वस्तुरूपे सत्यामेव प्रसभौ न जायते तत्राभावस्थ प्रमाणत्वसद्रूपेण प्रमितिजनकत्वमिति उभश्लोकस्यार्थः।

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते।[२] इति श्लोकार्धेन प्रमाणभाव इत्यत्र अभावपदं प्रागभावपदमिति स्पष्टीकृतम्।

नन्वभावज्ञानमिन्द्रियेणैव जायतामित्याशङ्क्य इन्द्रियस्य घटाद्यभावस्य च संयोगाभावात् असंनिकृष्टस्य तस्य इन्द्रियेण ग्रहणं न सम्भवतीति समाधानमुभम्। तदाह –

**न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः।**
**भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य च॥**[३] **इति।**

## अत्र न्यायरत्नाकरस्य योगदानम्

नन्वभावेन साकमिन्द्रियस्य संयोगाभावेऽपि इन्द्रियसंयुभविशेषणतासंनिकर्षेण अभावग्रहणं सम्भवति इति चेत् – अत्राहुः न्यायरत्नाकरे पार्थसारथिमिश्राः – विशेष्यविशेषणभावस्य संबन्धान्तरपूर्वकत्वं भूतलं घटवत् इत्यादौ दृष्टमिति अभावस्य भूतलविशेषणत्वमन्येन संबन्धेन वभव्यम्। तत्र न तावत् संयोगेन अभावस्य विशेषणस्य वक्तुं शक्यते। अभावस्य अद्रव्यत्वात् नापि समवायेन अभावतद्धेतोः समवायानभ्युपगमात्। अभ्युपगमे वा संयुभसमवायेनैव अभावग्रहसंभवात् संयुभविशेषणत्वं संनिकर्ष इति परित्यभं स्यात् इति।

## अनुपलब्धेः प्रमाणान्तरत्व साधकप्रमाणप्रदर्शनम्

किं च यत्र अधिकरणेन इन्द्रियसंयोगो नास्ति। तत्राप्यभावबुद्धिर्भवति। तत्र च इन्द्रियसंयुभविशेषणत्वमपि अभावस्य वभुं न शक्यते। अतस्तत्र अभावबुद्धिरिन्द्रियजन्या न भवितुमर्हति। तदाहुः

---

१. श्लोकवार्तिकम् – पृ. ४०९
२. श्लोकवार्तिकम् – पृ. ४१९
३. श्लोकवार्तिकम् – पृ. ४१४

**स्वरूपमात्रं दृष्ट्वापि पश्चात् किंचित् स्मरन्नपि।**
**तत्रान्येनास्मितां पृष्टस्तदैव प्रतिपद्यते॥[१] इति।**

पद्यमिममेवं व्यवारिषुः न्यायरत्नाकरे पार्थसारथिमिश्रपादाः - यदा हि कश्चित् प्रातःकाले कंचिद्देशमध्यासीमः तत्र व्याघ्रादीकमदृष्ट्वा तदस्मरणाच्च तदभावमप्यगृहीत्वा देशमात्रं दृष्ट्वा देशान्तरगतो मध्यन्दिने अन्येन पृच्छयते कश्चित् तस्मिन् देशे प्रातःकाले व्याघ्रो गजः सिंहो वा समागतः इति स तदा तं देशमवगतत्वात् स्मरन्नपि तत्र देशे अन्येषां व्याघ्रादीनामभावं प्रागगृहीतं तदैव गृह्णाति। न च मध्यन्दिनसमये प्रातः कालीकस्याभावस्य अनिन्द्रियसंनिकृष्टस्य प्रत्यक्षेणग्रहणं सम्भवति। ननु योग्यानुपलब्धिरपि तदानीं नास्ति। न हि तदानीं ( मध्यन्दिने ) प्रातस्तनस्यार्थस्य उपलब्धियोग्यता अस्ति। सत्यम्, प्रत्यक्षयोग्यता नास्ति, स्मृतियोग्यता त्वस्त्येव। तदिदं स्मर्तव्यत्वे सति अस्मरणं स्मरणहेतुभूतोपलब्ध्यभावपर्यवसितं मध्यन्दिनवेलायां विद्यमानं प्रातस्तनमभावं बोधयति। अतोऽभावः अनुपलब्धिप्रमेय इति। तथा च कुमारिलवार्तिके प्रातकालीकस्थाभावस्य मध्यन्दिने प्रतीतिरनुपलब्धि-प्रमाणजन्येति प्रधानयुभिरुभा भवति।

एवमनुपलब्धेः प्रमाणान्तरत्वसाधकानि प्रमाणानि बहूनि श्लोकवार्तिके प्रादर्शिषत। तत्र स्थालीपुलाकन्यायेन द्वित्राप्यत्रप्रदर्शयामः।

१. यथा अभावरुपस्य ग्राहकं भावरुपमेव प्रमाणम्। तथा अभावज्ञानस्यापि ग्राहकं प्रमाणं तदनुरूपमेव भवितुमर्हति। तथा चोभं भट्टपादैः

**अभावो वा प्रमाणेन स्वानुरूपेण मीयते।**
**प्रमेयत्वात् यथा भावः तस्मात् भावात्मकात् पृथक्॥[२] इति।**

अभावः स्वानुरूपेण प्रमाणेन प्रमीयते प्रमेयत्वात् भाववत् इत्यनुमानप्रयोगः विवक्षितोऽत्र।

२. अनुपलब्धेर्मानान्तरत्वे अनुमानान्तरमपि प्रायोजि-प्रमाणाभावः प्रत्यक्षादेर्भिद्यते अभावशब्दवाच्यत्वात् प्रमेयाभाववत् इति - तदुभम् -

**अभावशब्दवाच्यत्वात् प्रत्यक्षादेश्च भिद्यते।**
**प्रमाणानामभावो हि प्रमेयाक्षामभाववत्॥[३] इति।**

---

१. श्लोकवार्तिकम् - पृ. ४१६
२. श्लोकवार्तिकम् - पृ. ४२२
३. श्लोकवार्तिकम् - पृ. ४२२

## शास्त्रदीपिकायाम् अनुपलब्धिः[1]

अत्र शास्त्रदीपिका - योग्यभूतायाः घटादिविषयकायाः प्रमितेर्योऽनुदयः सोऽनुपलब्धि-शब्दवाच्यः। योग्यानुलब्धेश्च सत्तामात्रेणैव अभावज्ञानकारणत्वेऽपि तद्घटकयोग्यतायास्तु ज्ञाततयैव कारणत्वं न सत्तामात्रेण। तथा च यदा सदपि योग्यत्वं न ज्ञातं तदा पुरुषो नाभावम् अवगच्छति। यदा च असदपि योग्यत्वं भ्रान्त्या ज्ञातं तदा पुरुषोऽभावमवधारयति। अतः चक्षुरादिवत् सत्तामात्रेणैव स प्रमापकः, न ज्ञाततया, अतो नानवस्था।

## न्यायभूषणप्रभाकरविजयादिमतनिरासः

एतेन न्यायभूषणप्रभाकरविजयादिकृदनवस्थापरं दूषणमपास्तम्।

## न्यायभूषणविमर्शः

यत्तु यथा गोत्वं पूर्वं पिण्डान्तराविशिष्टमेव दृष्ट्वा पश्चात् पिण्डान्तरे तद्विशिष्टं दृष्ट्वा प्रथमपिण्डेऽपि तद्विशिष्टत्वेनानुस्मरति "एतत्सदृशं तत्राहमद्राक्षम्" इति ; तथा प्रतियोग्यवच्छेदेन तत्समीपस्थं तदभावं गृहीत्वा अन्यत्रोपलब्धमपि तदवच्छेदेनैव अनुस्मरति - "अयं पदार्थः तत्र नासीदिति"। तस्मात् नाभावः पृथकप्रमाणमिति न्यायभूषणम्। तदपि एवं परिहर्तव्यम् - अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वनियमेन प्रातःकाले कथमपि प्रतियोगिनः बुद्धावनारूढतया तदभावस्य ज्ञानासंभवात्।

## न्यायमञ्जरी निरासः

एतेन प्रातः कालिकाभावविषये प्रातरेवानुभूतस्य अभावस्य प्रश्नादिना उद्बुद्धेन संस्कारेण मध्याह्नेस्मरणं भवतीति न्यायमञ्जरीकृन्निरूपणमपि परास्तम्।

## तात्पर्यटीकाविमर्शः

यदपि तात्पर्यटीकायां दृश्यस्य वस्तुनः सत्ता दर्शनव्याप्या। तथा च व्यापकीभूतस्य दर्शनस्य निवृत्त्या व्याप्यस्य दृश्यस्य निवृत्तिरनुमीयत इत्याशयेन मद्गेहं तदा मैत्राभाववत् ज्ञानार्हस्य मैत्रस्याज्ञाने गेहस्य ज्ञायमानत्वात्। यत् यस्य ज्ञानार्हस्य मैत्रस्याज्ञाने गेहस्य ज्ञायमानत्वात्। यत् यस्य ज्ञानार्हस्य अज्ञाने ज्ञायते तत् तदभाववत्। यथा घटाभाववद्भूतलम्। तथा च गेहम्। तस्मात् तथा इति पञ्चावयवप्रदर्शनपूर्वकमनुमानं प्रादर्शयन् वाचस्पतिमिश्राः -

तदपि चिन्त्यम् - व्यापकनिवृत्त्या व्याप्यनिवृत्तिमनुमानेन अवश्यं दृष्टान्ते निवृत्तिद्वयमवगम्य तयोश्चव्याप्तिमवधार्य साध्यधर्मिणि पक्षे च दर्शननिवृत्तिरूपहेतुं केनचित् प्रमाणेन अवगम्य ततो

१. श्लोकवार्तिकम् - १-१-५

दृश्यनिवृत्तिरनुमातव्या। निवृत्तेश्चाभावात्मिकाया न प्रत्यक्षेण ग्रहणं संभवति। निवृत्त्यन्तरेण तदनुमाने तदपि निवृत्तिरूपत्वात्। निवृत्त्यन्तरेण अनुमातव्यम्। तदपि तथेत्यनवस्थापत्तिः। तस्मात् क्वचित् प्रमाणभूतया अनुपलब्ध्या अभावः प्रत्येतव्य इति न्यरूरुपन् पार्थसारथिमिश्राः। तथा च अनवस्थापरिहाराय अनुमानभिन्नया अनुपलब्ध्यैव साधनीभूतज्ञानाभावोऽवगन्तव्यः येन दृश्याभावः अनुमीयेत। अतः साधनभूत-ज्ञानाभावावगत्यर्थमवश्यमनुपलब्धेः प्रामाण्यं स्वीकार्यमिति फलितम्।

## प्रभाकरमते अनुपलब्धिः

अथ गुरवः - प्राभाकराणां मते अभावस्य अधिकरणात्मकत्वात् अधिकरणस्य च इन्द्रियग्राह्यत्वेन भावातिरिभस्याभावरूपस्य प्रमेयस्यैवाभावात् तदर्थमनुपलब्धि- प्रमाणस्वीकरणं नोपपद्यत इति शालिकाचार्यः प्रकरणपञ्जिकायां न्यरूरुपत्। यद्यपीदं पूर्वमेव अभाववादे प्रादीदृशाम। तथापि अत्र स्थूणानिखनन्यायेन किंचित् प्रस्तुमः।

**"प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते"** ॥[1]

इत्याचार्यग्रन्थेन प्रमाणाभावपदेन अनुपलब्धिर्विवक्षिता। सा च स सत्तया अभावग्रहं गृह्णाति। स्वापादौ सर्वाभावप्रतीतिप्रसङ्गात्। तदुभममृतकलायां -

**"स्वापावस्थागतस्यापि प्रमाणत्वप्रसङ्गतः॥ इति** ॥[2]

न च ज्ञाता सती सा अभावबोधिकेति वाच्यम्। अनवस्थापत्तेः। तथा हि - कस्यचित् वस्तुनः कुत्रचित् पूर्वमदृष्टस्य पुनस्तास्मिन्नेव देशे दृश्यमानस्य दर्शनसमानकालीनः अभावो गृह्यते "इदमिह पूर्वं नासीत्" इति। ततश्च तस्य दर्शनात् दर्शनाभावो निवृत्त इति प्राक्कालीन एव दर्शनाभावोऽनुसन्धीयमानः अभावग्रहकारणमिति वभव्यम्। ततश्च ज्ञातैवानुपलब्धिरभाव-ग्रहकारणमित्यापतति। तथा च अनुपलब्धेरप्यभावरूपतया तद्भावमप्यनुपलभ्यमित्यनवस्था। तदुभं शालिकाचार्यैः

**"अदर्शने निवृत्तेऽपि पुनर्भावस्य कस्यचित्।**
**प्राङ्नास्तित्वं व्यपदिशन्त्यदृष्टस्य पुरा क्वचित्"** ॥

**"दृश्यस्यादर्शनं तेन ज्ञातं सदवबोधकम्।**
**दृश्यादर्शनस्तस्य ज्ञानं चेदव्यवस्थितिः॥"**[3]

इति। अतः अनुपलब्धिः पृथक् प्रमाणं नेति सिद्धम्।

---

१. श्लोकवार्तिकम् - ४१९
२. प्रकरणपञ्चिका - १०८
३. प्रकरणपञ्चिका - १०९

किंच "अभावोऽपि प्रमाणाभावः" इत्यादिभाष्यं नाभावप्रमाणस्य लक्षणपरम्। अपि तु अभावः केनापि प्रमाणेन नावगम्यते। अतः प्रमेयस्यैवाभावात् नाभावः प्रमाणं भवतीत्येवं परम्। तदुभम्

**"अभावाख्येन मेयोऽस्ति यदर्थं प्राथ्र्यते पुनः"[१] ॥इति॥**

विस्तरस्तु अमृतकलायां द्रष्टव्यः।

## विशिष्टाद्वैतमते अनुपलब्धिः

अथ भावान्तराभाववादिनां भगवद्रामानुजमतानुयायिनां मतेऽपि नानुपलब्धिः पृथक् प्रमाणपदमश्नुत इति प्रतीमः। तथा हि - "इयं गौः अश्वो न" इत्यत्र गोत्वमेव अश्वत्वाभावः। एवं च गोत्वग्राहकप्रमाणमेव अश्वत्वाभावादिग्राहकमिति न पृथक् प्रमाणमस्ति। अनुपलब्धिरपि उपलब्ध्य-भावः। अश्वत्वाद्युपलब्ध्यभावो नाम गोत्वाद्युपलब्धिरूपो धर्मभूत- ज्ञानपरिणाम विशेष एव। तस्य प्रत्यक्षज्ञानस्य करणं चक्षुरादीन्द्रियमेव। ज्ञानरूपस्य अभावस्य तु स्वयमेव प्रकाशः। ज्ञानस्य स्वयंप्रकाशत्वात्। अतः अभावव्यवहारः सर्वोऽपि भावैरेव।

नन्वयं गौरिति गौत्वेन रूपेण प्रत्यक्षे इन्द्रियस्यैव करणत्वेऽपि अश्वो नेति अश्वभेदत्वेन ग्रहणकाले अनुपलब्धिः प्रमाणं स्यात् इति चेन्न _a गोत्वादिधीवत् अश्वभेदादिधीरपि प्रत्यक्षमेव। चक्षुराद्यन्वयव्यतिरेकानुविधानस्य तुल्यत्वात्। अत्र अभावज्ञानमिन्द्रियजन्यम्। इन्द्रियान्वयव्यतिरेका-नुविधायित्वात् इत्यनुमानं विवक्षितम्। तथा च गोत्व विषये यः संनिकर्षः, स एव अभावत्वेन अभावग्रहणेऽपि हेतुः। न च कदाचित् गोत्वेन कदाचिच्च अश्वभेदत्वेवेति ग्रहणे कथं वैलक्षण्यमिति वाच्यम्। अश्वतादात्म्य ग्राहकसामग्रीसत्त्वेऽपि अश्व इत्यनुपलब्ध्या सहितं चक्षुरेव अश्वभेदत्वेन तद्ग्रहे कारणम्। अन्यदा गोत्वेनेति भेदः। तत्सिद्धं गोत्वग्राहकप्रमाणमेव अश्वत्वाभावादिग्राहकप्रमाणमिति न पृथक् अनुपलब्धिर्नाम प्रमाणम्। तथा च अभावात्मना ग्रहणेऽपि प्रतियोगिस्मरणादिसहकारिसहितानि अक्षादीन्येव प्रमाणानीति न तदतिरिभकल्पनावकाशः।

## प्रातर्गजाभावादिज्ञानमनुमानगम्यम् इति निरूपणम्

एतेन प्रातर्गजाभावादिज्ञानमपि व्याख्यातम्। तथा हि - यदा प्रातश्चत्वरे संचरितवन्तं कंचित् पुरुषं कश्चन पथिकः मध्याह्ने पृच्छति। "अपि प्रातश्चत्वरे गज आसीदिति। तस्य तु पृष्टस्य चत्वरसंचरणसमये गजादिस्मरणस्यानवकाशेऽपि प्रातश्चत्वरे गजो नासीदिति प्रत्युत्तरं प्रवर्तते ; प्रातस्तत्र गजस्य अनुपलब्धत्वात्। तत्र प्रातःकालीन गजाभावः प्रातः कालत्वरसंसर्गविशेष एव। यथा भूतले

---

१. प्रकरणपञ्चिका - ११०

घटो नास्तीत्यत्र घटाभावः यत्कालावच्छेदेन वस्तुनः ग्रहणं संभाव्यते। तद्देशतत्कालसंबन्ध एव अभिमतः इति। यस्य तु कदाचित् चत्वरसंचरणकाले गजदर्शनक्रयणादिलोलुपत्वे गजस्मरणमपि। तस्य तदभावप्रत्यक्षमपि जातमेव स्यात्। अतः स्मर्तव्यस्य स्मरणा भावाद्वा तदभावानुमानम्।

किं च 'सघटं भूतलम्' इतिवत् 'अघटं भूतलम्' इत्यपि ह्यपरोक्षा प्रतीतिः" इत्यादिग्रन्थेन वेदान्तोदयनान्तेवासिनः

**"प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्।**
**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः"[१] ॥**

इत्याचार्योदयनोभान् हेतून् अन्ववादिषुः न्यायपरिशुद्धौ[२] । विवरणं तु विस्तराभिया नेह प्रतन्यते।

तत्सिद्धमनुपलब्धिर्नाम न मानान्तरं श्रीमद्रामानुजाचार्यमते इति।

---

१. न्यायकुसुमाञ्जलिः - पृ २३०
२. न्यायपरिशुद्धिः -

# सांख्यनये अनुमानम्

**डा० महेशप्रसादसिलोड़ी**

भारतीयदर्शनेषु सांख्यशास्त्रं ज्ञानप्रधानं दर्शनशास्त्रं विद्यते, यत्र "व्यक्ताव्यक्तज्ञ" पञ्चविंशतितत्त्वानां प्रसंख्यानेन दु:खत्रयात्यन्तविघातरूपं कैवल्यं साध्यत इति प्रतिपादितम्। पञ्चविंशतितत्त्वानां प्रमेयानां ज्ञानार्थं दृष्टामनुमानमाप्तवचनं चेति प्रमाणत्रयमपेक्षितम्। तेषु त्रिषु प्रमाणेष्वपि अनुमानमस्ति दृढतरं प्रमाणम्। प्रकृतिपुरूषयो: सिद्धिरनुमानप्रमाणेनैव भवतीति सांख्यशास्त्रस्य विशिष्टं मतमस्ति।

अनुमानस्वरूपविषये सांख्यदर्शनस्य मतं नैयायिकादीनां दार्शनिकानां मतेभ्य: किञ्चिद् भिन्नं विशिष्टं च वर्त्तते। अन्ये दर्शनग्रन्था: तेषां व्याख्यातार: पूर्ववच्छेषवत्सामान्यतोदृष्टञ्चेत्यनुमानत्रैविध्यमामनन्ति,, किन्तु वीतावीतभेदेन द्विविधमेवानुमानमिति वाचस्पतिमिश्रविज्ञानभिक्षुयुक्तिदीपिकारादयो विद्वांसो गृहणन्ति।

वीतं द्विविधम्-पूर्ववत् सामान्यतोदृष्टं च। अवीतं त्वेकविधमेव, तत्र प्रकृते: सिद्धययर्थं पूर्ववदनुमानमपेक्षितम्, इन्द्रियसाधनाय च सामान्यतोदृष्टानुमानस्यावश्यकता वाचस्पतिमिश्रेण सांख्यतत्त्वकौमुद्यां स्वीकृता। कार्यकारणयोरभेदसाधनाय अवीतानुमानमपेक्षते, वाचस्पतिमिश्रेण प्रकृति: तत्कार्ययो: अभेदसाधनाय अवीतानुमानमपेक्ष्यते।

"युक्तिदीपिका" सांख्यदर्शनस्य अतिविशिष्टतमो ग्रन्थो विद्यते, युक्तिदीपिकाया आरम्भे एव कथितं यत् सांख्यरूपिणो हस्तिन: वीतावीतौ द्वौ विषाणौ स्त:। स पक्षतावने विचरति, अन्ये प्रवादास्तु तत्कृते सल्लथीखण्डसमा भंगुरा: सन्ति, यथा–

**वीतावीतविषाणस्य पक्षतावनसेविनः।**<br>
**प्रवादाः संख्यकारिणः सल्लकीषण्डभंगुराः॥**

युक्तिदीपिकाया अन्यदप्येकं वैशिष्ट्यं विद्यते। अन्यदर्शनेषु परार्थानुमानप्रसंगे पञ्चावयववाक्यस्य निर्देशो विहित:। युक्तिदीपिकाकारेण अनुमानस्य दशावयवा: स्वीकृता:। जिज्ञासासंशयप्रयोजन-शक्यप्राप्तिसंशयव्युदासा इत्येता: पञ्चावयवा: व्याख्याता:। प्रतिज्ञाहेतूदाहरणोपसंहारनिगमनानि इत्येता: पञ्चावयवा: परिप्रतिपादनाङ्गम्। इत्थं दशावयववाक्येनानुमानं पूर्णं भवति।

विज्ञानभिक्षुकृतं सांख्यप्रवचनभाष्यं कपिलरचितस्य सांख्यसूत्रस्य विस्तृतं सुविशदं च व्याख्यानां सांख्यरुचिभ्यो विद्वद्भ्योऽतितरां रोचते, तत्रापि प्रथमाध्याये अनुमानस्य विवेचनं प्राप्यते, तत्र वीतावीतयोरनुमानयोरुल्लेखो नास्ति, अनुमानस्य त्रैविध्यमेव तत्र व्याख्यातम्।

भावगणेशकृतं तत्त्वयाथार्थ्यदीपनमस्ति संक्षिप्तो ग्रन्थः। सांख्यसूत्रविवरणं तत्त्वसमाससूत्रवृत्तिश्चेति ग्रन्थद्वयानां कर्तोर्नामानि नोपलभ्येते। एषु त्रिष्वपि ग्रन्थेषु अनुमानस्य संक्षिप्ता चर्चा प्राप्यते नास्ति तत्र कापि नूतना वार्ता।

इत्थं सांख्यनये अनुमानविवरणं यत्रकुत्रचिद्पि सांख्यग्रन्थेषु प्राप्यते तस्य सन्दर्भाः मयाऽत्र संक्षिप्तेन लघुशोधपत्रे दीयते तच्चेत्थम्-

## सांख्यतत्त्वकौमुद्याः सन्दर्भाः
## अनुमानस्यावश्यकतायाः स्थापनम्-

नानुमानं प्रमाणमिति वदना लोकायतिकेनाप्रतिपन्नः सन्दिग्धोविपर्यस्तो वा पुरुषः कथं प्रतिपद्येत? न च पुरुषान्तरगता अज्ञान संदेहविर्पययाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम् नापि प्रमाणात्तरेण, अनभ्युपगूमात्, अनवंघृंताज्ञानसशंयविपर्यस्तु यं कंचन पुरुषं प्रति प्रवर्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुकेक्ष्येत, तदनेनाज्ञानादयः परपुरुषवर्तिनोऽमिप्रायभेदाद् वचनभेदाद्वा लिङ्गदनुमातव्याः— इत्यकामेनाप्युमानं प्रमाणमभ्युपेयम्।

**अनुमानस्य लक्षणम्—**वाचस्पतिमिश्रानुसारेण-तत्र प्रत्यक्षकार्यत्वात् अनुमानं प्रत्यक्षानन्तरं लक्षणीयम्, विशेषलक्षणस्येत्यनुमानसामान्यं तावस्लक्षयति "तल्लिडगलिङ्गिपूर्वकम्" इति लिंङ्ग व्याप्यम्, लिङ्गि व्यापकमस्ति। लिङ्गिग्रहणं चावर्तनीयम्, तेन च लिङ्गमस्यास्तीति पक्षधर्मताज्ञानमिति दर्शितं भवति। तद्व्याप्यव्यापकभावपक्षधर्मज्ञानपूर्वकमनुमानमित्यनुमानसामान्यं लक्षितम्।

**अनुमानं त्रैविध्यम—**त्रिविधमनुमानमाख्यातमिति, तत्र सामान्यतो लक्षितमनुमानं विशेषतत्रिविधं पूर्ववत्, शेषवत् सामान्यतोदृष्टं चेति। तत्र प्रथमं द्विविधम्-वीतमवींत च, अन्वयमुखेन प्रवर्तमानं विधायकं वीतम्, व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतम्।

### अवीतम्-तत्रावीतं शेषवत्। शिष्यते परिशिष्यते इति शेषः

वीतम्-वीतं द्वेधा-पूर्ववत् सामान्यतोदृष्टं च, तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत्तत्पूर्ववत्, पूर्वं प्रसिद्धं, दृष्टस्वलक्षणसामान्यमिति यावत्, तदस्य विषयत्वेनास्त्यनुयानज्ञानस्येति पूर्ववत्, यथा धूमाद् वहनित्वसामान्यविशेषः पर्वतेऽनुयीयते, तस्य च वह्नित्व सामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम्।

1. सां का॰-5 पृ॰ सं॰ 52

अपरं च वीतं सामान्यतोदृष्टमदृष्टस्वलक्षणसामान्यविषयम्, यथेन्द्रिय विषयमनुमानम्, अत्र हि रुपादिविज्ञानानां क्रियात्वेन करणवत्त्वमनुमीयते, इन्द्रियजातीयं हि तत्करणम्, न चेन्द्रियत्व सामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचररोऽर्वाग्दृशाम्, यथा वह्नित्वसामान्यस्य स्वलक्षणं वह्निः। सोऽयं पूर्ववतः सामान्यतोदृष्टात्, सत्यपि वीतत्वेन तुल्यत्वे विशेषः। अत्र च दृष्टं दर्शनम्, सामान्यत इति सामान्यस्य सार्वविभक्तिस्तसिल्। अदृष्ट स्वलक्षणस्य सामान्यविशेषस्य दर्शनं सामान्यतोदृष्टमनुमानम्।

## युक्तिदीपिकानुसारेण अनुमानम्

(1) "अनुमानं द्वयोरविनाभाविनोरेकं प्रत्यक्षेण प्रमायततपूर्वकं सम्बन्ध्यन्तरे यत्पश्चान्मानं भवति।"

(2) सांख्यरुपिणो हस्तिनः विषाण-तुल्यौ वीतावीतानुमानौ स्तः।

**वीतावीतविषाणस्य पक्षतावनसेविनः।**
**प्रवादाः सांख्यकरिणः सल्लकीषण्डभङ्गुराः॥**

(3) अनुमानस्य त्रैविध्यम्–त्रिविधमनुमानमाख्यातम्। अनुमानं त्रिप्रकारकमाचार्यैराख्यातम्-पूर्ववत् शेषवत्, सामान्यतोदृष्टं च, तत्र पूर्वमितिकारणमुच्यते, यस्य हि यत् कारणं स लोके तत्पूर्वक इत्युच्यते, यथा तन्तुपूर्वकः पटः, देवदत्तपूर्वको यज्ञदत्तः। पूर्वमस्यास्तीति पूर्ववत्। शेषइति विकारनाम, शिष्यते इति कृत्वा, तथा चोक्तम्-न शेषोऽग्नेरन्यस्य जातमित्यस्ति, नापत्यमन्येन जातं सम्भवतीति। शेषोऽस्यास्तीति शेषवत्।

**पूर्ववत्–**यदा कारणमभ्युदितं दृष्टवा भविष्यत्त्वं कार्यस्य प्रतिपद्यते, तद् यथा मेघोदये भविष्यत्वं वृष्टेः।

**शंका**-नैतदुहारणमनेकान्तत्वात्, न हि मेघोदयोऽवश्यं वृष्टेः कारणं भवतिवाटवादिनिमित्तप्रतिबन्ध सम्भवात्,

**समाधानम्–**उच्यते-यदि तर्हि कारणशक्तिं सहकारिशक्त्यन्तरानुगृहीतामप्रतियोगिनी दृष्टवा कार्यस्य व्यक्तिं प्रतिपद्यते, तद् यदा लौहदण्डादिसाधनसम्पन्नेन व्यापारवता कुम्भकारेणाधिष्ठितां मृदमुपलभ्य घटस्य।

---

1. युक्तिदीपिका, द्वितीयाह्निक पृ. सं.-107
2. युक्तिदीपिका प्रथमाह्निक मंगलाचरण, पृ०-1
3. युक्तिदीपिका पृ० सं.- 133

